## २–श्रीअजितजिनस्तुतिः

[ आर्यागीतिः ]

**मुनिततिरपि यं न रुद्धमोहा, शमजितमारमदं भवन्दिताऽऽपत् ।**
**भज तमिह जयन्तमाऽऽप्तुमीशं, शमऽजितमाऽऽरमऽदम्भवन् ! दितापत् ॥१॥**

मुनिततिरिति ॥ हे 'अदम्भवन् !' अकपटवन् ! त्वं 'दिता' खण्डिता आपद् येन एतादृशम्, दुःखलेशेनाऽप्यकलङ्कितमित्यर्थः, 'शम्' सुखम्, 'आप्तुं' लब्धुम् 'आरम्' अन्तरङ्गारिसमूहं 'जयन्तम्' अभिभवन्तम्, 'इह' जगति तम् अजितं भज । तं कम् ? यं 'मुनिततिरपि' योगिपङ्क्तिरपि 'न आपत्' न साक्षाच्चक्रे, तथा चार्वाग्दृशां ज्ञानगोचरत्वस्य वार्ताऽपि दूरे इति भावः । कीदृशी मुनिततिः ? रुद्धः—वशीकृतो मोहो यया सा । पुनः कीदृशी ? भेन नक्षत्राख्येन ज्योतिष्कदेवभेदेन 'वन्दिता' स्तुता अभिवादिता वा । यं कीदृशम् ? शमेन उपशमेन जितौ मारमदौ कन्दर्पाऽहङ्कारौ येन तम; यद्यपि शमस्य क्रोधोपशामकत्वमेव मारमदयोस्तु ब्रह्मचर्यमार्दवाभ्यामेव जयोपपत्तिः, तथापि शमसम्पत्तौ ब्रह्मचर्यमार्दव-सम्पत्तिरपि प्रायो नियतैवेत्येवमुक्तिः । पुनः किम्० ? 'ईशम्' परमसामर्थ्यवन्तम् । नन्वत्र भगवतो योगिनामपि दुराराधत्वमुक्तं तत् कथमतिकृच्छ्रसाध्ये भगवद्भजनेऽस्मादृशां प्रवृत्तिरिति चेत् ? न; अतिकृच्छ्रसाध्येऽप्यर्थे उत्कटफलेच्छया दरिद्रनिधिलाभाशाज्ञातेन प्रवृत्त्यप्रतिबन्धादिति विभावनीयम् ॥ [१]

**नियतमुपगता भवे लभन्ते, परमतमोहर ! यं भयाऽनिदानम् ।**
**हर रुचिर ! ददद् जिनौघ ! तं द्राक्, परमतमोहरयं भयानि दानम् ॥ २ ॥**

नियतमिति ॥ हे 'परमतमोहर !' अनन्तभवप्रचितपापनाशक !, परमतमान्—उत्कृष्टतमान् ऊहान्—शुभोदर्कतर्कान् राति—ददाति तस्य सम्बोधनं हे परमतमोहर ! इति वा । हे 'रुचिर !' मनोज्ञ ! । कया ? 'भया' कान्त्या । हे 'जिनौघ !' भगवत्कदम्बक ! । त्वं 'द्राक्' शीघ्रं तं परेषां—शाक्यादीनां । मते—दर्शने मोहः—यो दृष्टिरागः तस्य रयं[2]—वेगं हर । त्वं किं कुर्वन् ? 'अनिदानम्' निदानरहितं । 'दानम्' अभयदानादिकं[1] ददत् । तं कम् ? यम् 'उपगताः' आश्रिताः प्राणिनः । 'भवे' संसारे । 'नियतं' निश्चितं 'भयानि'

"इहपरलोगादाणमकम्हाआजीवमरणमसिलोआ ।
सत्त भयट्ठाणाइं, जिणेहिं [3]भइंतमणिआइं ॥"

इति गाथाप्रसिद्धान् आतङ्कान् 'लभन्ते' प्राप्नुवन्ति ॥ [ २ ]

**नयगहनमऽतिस्फुटानुयोगं, जिनमतमुद्यतमानसाः ! श्रुतारम् ।**
**जननभयजिहासया निरस्ताऽऽजि नमत मुद्यतमानसाधुतारम् ॥ ३ ॥**

नयगहनमिति ॥ भोः ! 'उद्यतमानसाः !' उद्यतं निरन्तरं चरणकरणपालनप्रणिधानप्रवणं मानसं—अन्तःकरणं येषां ते तथा यूयं 'जननभयजिहासया' संसारातङ्कहननेच्छया । 'जिनमतं' पारमर्षमागमं 'नमत' नमस्कुरुत । इत्थमेव विध्यर्थाराधनं कृतं भवति, श्रुतसम्पत्त्येकाग्रचित्तताऽऽत्मस्थापनपरस्थापनहेतुभिः परमार्थतो भवत्यागार्थनिर्जरार्थमेव श्रुताध्ययनोपदेशात् । तथा चाऽऽगमः—

१ अभयादिकं की० ॥ २ परदर्शनमोहवेगमित्यर्थः ॥ ३ सिद्धत की० ॥

"चउव्विहा खलु सुअसमाही भवइ । तं जहा सुअं मे भविस्सइ त्ति अज्झाइयव्वं भवति (१), एगग्गचित्तो भविस्सामि त्ति अज्झाइयव्वं भवति (२), अप्पाणं ठावइस्सामि त्ति अज्झाइयव्वं भवति (३), ठिओ परं ठावइस्सामि त्ति अज्झाइयव्वं भवति (४) ।" इति ।

कीदृशम् ? नयैः नैगमादिभिः गहनं—गम्भीरम् । पुनः किम्० ? सूत्रार्थ-निर्युक्त्यर्थ-निरवशेषार्थ-प्रतिपादनक्रमाद् अतिस्फुटाः अतिप्रकटा अनुयोगा यस्य तत्, नयगहनमतीनां नयनिविडबुद्धीनां स्फुटः—प्रकटः अनुयोगो यस्येत्येकमेव वा विशेषणम् । पुनः किम्० ? धुतं—कम्पितं आरम्—अरिसमूहो येन तत् । पुनः किम्० ? 'निरस्तः' निराकृत आजिः सङ्ग्रामो येन यत्र वा तत् । पुनः किम्० ? 'मुदा'-शमसुखसाम्राज्यलक्षणहर्षेण । 'यतमानाः' ध्यानादौ प्रवर्त्तमाना ये साधवः—श्रमणाः । तान् तारयति—भीमभवजलनिधि[1]पारं प्रापयतीति तत् ।

न चात्र 'प्रवृत्त्युत्तरं शमसम्पत्तिः, तत्सम्पत्तौ च प्रवृत्तिः' इत्यन्योऽन्याश्रयः शङ्कनीयः; अविशिष्टशमवतः प्रवृत्त्युत्तरं विशिष्टशमसम्पत्त्या दोषाभावात् । अत एवोक्तम्—,

"न साम्येन विना ध्यानं, न ध्यानेन विना च तत् ।
निष्कम्पं जायते तस्माद्, द्वयमन्योऽन्यकारणात्[2] ॥" इति ॥ [ ३ ]

**पविमपि दधतीह मानसीन्द्रैर्महितमदम्भवतां महाधिकारम् ।**
**दलयतु निवहे सुराङ्गनानामऽहितमदं भवतां महाधिकाऽरम् ॥ ४ ॥**

इति श्रीअजितजिनस्तुतिः ॥ २ ॥

पविमपीति ॥ 'इह' जगति [3]मानसी 'भवतां' युष्माकम् 'अहितमदं' शत्रुस्मयं 'दलयतु' निराकरोतु । किं कुर्वती ? 'इन्द्रैः' शक्रैः, 'महितं' पूजितं 'पविं' वज्रं 'अपि' पुनः 'सुराङ्गनानां' देवाङ्गनानां—'निवहे' समूहे 'महाधिकारं' प्रौढाधिपत्यं 'दधती'—बिभ्रती । महाधिं कारयतीति 'महाधिकारं' इति अहितमदविशेषणत्वपक्षे 'पविं' वज्रं शत्रुहननसावधानतया 'अपिदधती' अनाच्छादयन्ती इति व्याख्येयम् । भवतां कथम्भूतानाम् ? 'अदम्भवताम्' अकपटवताम् । मानसी कीदृशी ? 'अरम्' अत्यर्थं महैः उत्सवैः अधिका ॥ [ ४ ]

इति श्रीअजितनाथस्तुतिविवरणम् ॥ २ ॥

## ३—श्रीशम्भवजिनस्तुतिः

[ द्रुतविलम्बितम् ]

**शम्भव ! सुखं ददत् त्वं, भाविनि भावारवारवारण ! विश्वम् ।**
**वासवसमूहमहिताऽभाविनिभाऽवाऽरवारवाऽरण ! विश्वम् ॥ १ ॥**

शम्भवेति ॥ अभावि—अभविष्यद् निभं कपटं यस्य,—वीतच्छद्मतया कर्मबन्धहेत्वभावात्,—तस्य सम्बोधनं हे अभाविनिभ ! । भावारः— सम्यक्त्वच्छेदिमिथ्यात्वरूपभावचक्रस्यावयवविशेषः, शब्द-नयोपग्रहादाभिग्रहिकत्वादिर्गृह्यते, तस्य वारः—समूहस्तं वारयति—निराकरोति यस्तस्यामन्त्रणं हे भावार-

१ °जलधि° सा० वृ० ॥ २ °णम् ॥ ३ एतदभिधानाऽजितजिनशासनाधिष्ठात्री देवता ॥

वारवारण ! । हे 'वासवसमूहमहित !' इन्द्रव्रजार्चित ! । हे 'अरवारव !' अरवाणां—शब्दरहितानाम् अर्थाद् मूकानाम् आरवः—शब्दो यस्माद्धेतुभूतात् "मूको जल्पति" इत्यादि स्तुतेः तस्य सम्बोधनम् । हे 'अरण !' असङ्ग्राम ! । हे शम्भव ! त्वं 'विश्वं' सकलं 'विश्वं' जगद् 'अव' रक्ष । त्वं किं कुर्वन् ? 'भाविनि' शुभप्रणिधाने पुंसि 'सुखं' सातं 'ददद्' यच्छन् ॥ [ १ ]

**यद्धर्मः शं भविनां, सन्ततमुदितोदितोऽदितोदारकरः ।**
**स जयतु सार्वगणः शुचिसन्ततमुदितोऽदितोदितोऽदारकरः ॥ २ ॥**

यद्धर्म इति ॥ सः 'सार्वगणः' तीर्थकरसमूहो जयतु । किम्भूतः ? शुचिः—निर्मला सन्तता—अच्छिन्नधारा मुदिता—मुदिता परसुखतुष्टिर्यस्य सः, शुचिना—भाग्येन सन्तता—अविरलप्रवाहापतिता मुद्—आनन्दः ताम् इतः—प्राप्त इति वा । पुनः किम्० ? अदितम्—अखण्डितं प्रमाणान्तराबाधितत्वाद् उदितं—वचनं यस्य सः । पुनः किम्० ? न दाराः—स्त्रियः करः—दण्डश्च यस्य सः, कं—सुखं रातीति वा करः, अदारश्चासौ कर इति वा । पुनः किम्० ? उदारः—वार्षिकदानप्रवणत्वाद् निखिलयाचकप्रार्थितपूरणप्रत्यलः करः—हस्तो यस्य सः, उदाराः स्फाराः कराः—किरणा यस्य स इति वा । स कः ? 'यद्धर्मः' यदुपज्ञः श्रुतधर्मः 'भविनां' संसारिणां 'शं' सुखं 'अदित' ददौ । लभन्ते हि सुखमवश्यं श्रुताद् विदिततत्त्वाः प्राणिनः, ततः शुभोपाये प्रवृत्तिभावात् । अत एवोक्तम्

"पावाओ विणिवित्ती, पवत्तणा तह य कुसलपक्खम्मि ।
विणयस्स य पडिवत्ती, तिण्णि वि नाणे समप्पन्ति ॥" इति ।

कीदृशो यद्धर्मः ? 'सन्ततं' निरन्तरं अन्तराऽस्तमनाभावेन 'उदितोदितः' उत्पत्तिकालादारभ्य यावदवस्थानं लब्धोदय इति भावः ॥ [ २ ]

**जैनी गीः सा जयतान्न यया शमितामिता मिताक्षररुच्या ।**
**किं सन्तः समवतरन्नयया शमितामिताऽमिताऽऽक्षररुच्या ॥ ३ ॥**

जैनी गीरिति ॥ सा 'जैनी' आर्हती 'गीः' वाणी जयतात् । कीदृशी ? मितैः—स्वल्पैः अक्षरैः—वर्णैः रुच्या मनोहरा । बह्वर्थमल्पाक्षरमेव हि सूत्रमामनन्ति । अत एवोक्तम्

"सव्वणईणं जइ हुज्ज वालुया सव्वउदहि जं तोयं ।
इत्तो अणंतगुणिओ, अत्थो इक्कस्स सुत्तस्स ॥" इति ।

तदेवमत्रार्थापेक्षमक्षराणां मितत्वम्, अन्यथा तु बहुहस्तिप्रमाणमषीपुञ्जलेख्यत्वाभिधानान्न तदुपपत्तिः । अथवाऽत्र त्रिपदीरूपैव जैनी गीर्ग्राह्या, तस्याश्चोभयथाऽपि मिताक्षरत्वमेव । सा का ? 'यया' हेतुभूतया 'सन्तः' संविग्नगीतार्थाः शमिता—क्षपिता अमिताऽऽमिता—अपरिमितरोगिता[1] यत्र असातावेदनीयकर्मविटपिनः समूलमुन्मूलनाद् एतादृशं यद् अक्षरं—मोक्षस्तस्य रुचिः—अभिलाषस्तया किं 'शमिताम्' उपशमसम्पन्नतां 'न इताः' न प्राप्ताः ? अपि तु प्राप्ता एवेत्यर्थः । कीदृश्या यया ? समवतरन्तः अनुयोगापृथक्त्वदशायां प्रतिप्रतीकं समापतन्तो नयाः नैगमादयो यस्यां सा । तदुक्तम्,—

१ °ता यत्र वेद° सा० ॥

"अपुहत्ते समुआरो" इति ।
समवतरन्तः समुद्भवन्तो नयाः नीतयो यस्याः तयेति वा ॥ [ ३ ]

**दलयतु काञ्चनकान्तिर्जनतामहिता हिता हि ताराऽऽगमदा ।**
**इह वज्रशृङ्खला दुर्जनतामऽहिताहिताहितारागमदा ॥ ४ ॥**

इति श्रीशम्भवजिनस्तुतिः ॥

दलयत्विति ॥ 'इह' जगति वज्रशृङ्खला 'हि' निश्चितं 'दुर्जनतां' खलभावं दलयतु । कीदृशी ? काञ्चनवत् सुवर्णवत् कान्तिः द्युतिर्यस्याः सा । पुनः किम्० ? जनतया—जनसमूहेन महिता—पूजिता । पुनः किम्० ? 'हिता' हितकारिणी । पुनः किम्० ? तारम्—उज्ज्वलम्, आगमं—सिद्धान्तं ददाति वरदानेन सा, 'तारा' उज्ज्वला 'आगमदा' श्रुतदायिनी इति च पदद्वयं[1] व्याख्येयम्, तारायाः सुगतदेवताया आगमं द्यति—खण्डयतीति वा, तारे अगे सुरशाखिनि स्वक्रीडापर्वते वा मदः प्रायो यस्याः सेति वा, तां लक्ष्मीं राति—ददातीति तारस्तादृशो य आगमः राजनसमागमस्तं ददाति सेति वा । पुनः किम्० ? अहितेषु—वैरिषु आहितौ स्थापितौ अहितारागमदौ—अप्रियस्नेहाहङ्काराभावौ यया सा ॥ [ ४ ]

इति श्रीशम्भवनाथस्तुतिविवरणं समाप्तम् इति ॥ ३ ॥

# ४—श्रीअभिनन्दनजिनस्तुतिः

[ द्रुतविलम्बितम् ]

**त्वमभिनन्दन ! दिव्यगिरा निराकृतसमाजनसाध्वस ! हारिभिः ।**
**अहतधैर्य ! गुणैर्जय राजितः, कृतसभाजन ! साध्वसहारिभिः ॥ १ ॥**

त्वमिति ॥ हे 'निराकृतसमाजनसाध्वस !' निराकृतं—निरस्तं हेतूच्छेदात् समाजनानां—पार्षदलोकानां साध्वसम्—इहलोकादिभयं येन स तस्यामन्त्रणम् । कया ? 'दिव्यगिरा' सर्वभाषानुगामिन्या योजनगामिन्या सकलातिशयसम्पन्नया च भाषया, सापेक्षत्वेऽपि गमकत्वात् समासः । हे 'अहतधैर्य !' [ अहतम्—अविनष्टं धैर्यं धीरता यस्य स तस्यामन्त्रणम्, ] कैः ? साधून्—उत्तमान् न सहन्तीति साध्वसहाः ते च तेऽरयः—शत्रवस्तैः । हे 'कृतसभाजन !' कृतं—विहितं "सभाज प्रीतिसेवनयोः"[2] इति धातोः सभाजनं सन्तोषो येन तस्यामन्त्रणम् । हे अभिनन्दन ! त्वं जय । किंलक्षणः ? 'राजितः' शोभितः । कैः ? गुणैः । कीदृशैः ? 'हारिभिः' मनोहरैः ॥ [ १ ]

**भगवतां जननस्य जयन्निहाऽऽशु भवतां तनुतां परमुत्करः ।**
**त्रिजगतीदुरितोपशमे पटुः, शुभवतां तनुतां परमुत्करः ॥ २ ॥**

भगवतामिति ॥ 'इह' जगति 'भगवतां' तीर्थकृतां 'उत्करः' समूहः 'शुभवतां' कल्याणिनां 'भवतां' युष्माकम् 'आशु' शीघ्रं 'जननस्य' संसारस्य 'तनुतां' कृशतां 'तनुतां' करोतु । किं० कुर्वन् ? 'परं' शत्रुं 'जयन्' अभिभवन् । किंलक्षणः ? त्रिजगतीदुरितस्य—त्रिभुवनपातकस्य उपशमे 'पटुः' समर्थः । पुनः किम्० ? परां—प्रकृष्टां, सकलसांसारिकसुखातिशायित्वाद् मुदं मोक्षसुखं करोति यः स तथा ।

१ °द्वयमेव व्या° की० ॥ २ इति सिद्धहेमशब्दानुशासने, सिद्धा० कौमुद्यां तु प्रीतिदर्शनयोरित्यर्थे ॥

न चात्र 'संसारस्य कालस्थितिरूपस्य तनूभावः कर्तुमशक्यः' इति शङ्कनीयम्, कर्मस्थितिह्रासेन तत्तनूभावसम्भवात्, सूत्रप्रामाण्यात्, अन्यथा तदनुपपत्तेः, न च 'भगवता दृष्टस्य संसारस्य यथावस्थितत्वाद् ह्रासानुपपत्तिः' इत्यपि कुचोद्यमाशङ्कनीयम्, भगवताऽपि ह्रासयोग्यस्य ह्रासयोग्यतयैव दर्शनादित्यन्यत्र विस्तरः ॥ [ २ ]

**त्रिदिवमिच्छति यश्चतुरः स्फुरत्सुरसमूहमऽयं मतमऽर्हताम् ।**
**स्मरतु चारु ददत् पदमुच्चकैः, सुरसमूहमयं मतमऽर्हताम् ॥ ३ ॥**

त्रिदिवमिति ॥ 'अयं' जनः 'अर्हतां' भगवतां 'मतम्' आगमं 'स्मरतु' ध्यायतु । कथम्? उच्चकैः । कीदृशम्? सुष्ठु—शोभनो रसः—शान्ताख्यो यत्र यस्माद् वा तत् । पुनः किं[1]०? ऊहमयं प्रकृष्टविचारम् । पुनः किम्०? 'चारु' मनोहरम् । किं कुर्वत्? 'अर्हतां' पूजयतां 'मतम्' इष्टं 'पदं' मोक्षलक्षणं 'ददत्' यच्छत्, 'प्रवचनपूजाया मोक्षहेतुत्वात्'; 'अर्हतां' योग्यतां ददत् 'मतम्' अभीष्टं 'पदं' स्थानम् इति व्यस्तं वा व्याख्येयम् । अयं कः? यः 'चतुरः' निपुणः 'त्रिदिवं' स्वर्गम् 'इच्छति' समीहते । कीदृशं त्रिदिवम्? स्फुरन्—दीप्यमानः सुरसमूहः—देवगणो यत्र तत् ॥ [ ३ ]

**धूतसकाण्डधनुर्धतु तेजसा, न रहिता सदया रुचिराजिता ।**
**मदहितानि परैरिह रोहिणी, नरहिता सदया रुचिराऽजिता ॥ ४ ॥**

इति श्रीअभिनन्दनजिनस्तुतिः ॥ ४ ॥

धूतेति ॥ 'इह' जगति रोहिणी 'मदहितानि' ममाऽप्रियाणि 'धतु' खण्डयतु । कीदृशी? धूतं सकाण्डं—सबाणं धनुर्यया सा । पुनः किम्०? 'तेजसा'—प्रतापेन 'न रहिता' न वियुक्ता । पुनः किम्०? सत्—शोभनम् अयम्—इष्टदैवं यस्याः सा । पुनः किं०? रुच्या—कान्त्या राजिता—शोभिता । पुनः किम्०? 'परैः' शत्रुभिः 'अजिता' अनभिभूता । पुनः किम्०? नराणां मनुष्याणां हिता—हितकारिणी । पुनः किम्०? 'सदया' सकरुणा । पुनः किम्०? 'रुचिरा' मनोज्ञा, रुचिं—सत्सङ्गतिं राति—ददाति सा वा ॥ [ ४ ]

इति श्रीअभिनन्दनजिनस्तुतिविवरणम् ॥ ४ ॥



## ५—श्रीसुमतिजिनस्तुतिः

[ स्कन्धकम् आर्यागीतिर्वा ]

**नम नमदमरसदमरससुमतिं सुमतिं सदसदरमुदारमुदा ।**
**जनिताजनितापदपदविभवं विभवं नर! नरकान्तं कान्तम् ॥ १**

नमेति ॥ हे नर! त्वं सुमतिं 'उदारमुदा' प्रकृष्टहर्षेण 'नम' नमस्कुरु । कीदृशम्? नमन्तः अमराः—देवा यस्य स नमदमरः, सह दमरसेन—शमरसेन वर्तते यः स सदमरसः, सुष्ठु शोभना मतिर्यस्य स सुमतिः, ततो नमदमरश्चासौ सदमरसश्चासौ सुमतिश्चेति पदत्रयस्य कर्मधारयः, तम् । पुनः

1 किं० ? प्रकृष्ट ऊह-विचारो यत्र तदूहमयम् । की० ॥

किम्० ? संश्चासौ असदरः—असमयश्च सतां मध्ये असदरः—निर्भयो वा यः स तथा तम् । पुनः किम्० ? जनितः—कृतः अजनितापदस्य संसारतापाप्रदस्य आ—समन्ताद् जनितापं संसारतापं द्यति—खण्डयति वा यस्तस्य पदस्य—मोक्षलक्षणस्य विभवः—सारो येन तम् । पुनः किम्० ? 'विभवं' संसाररहितम् । पुनः किम्० ? नरकस्यान्तो यस्मात् तम् । पुनः किम्० ? 'कान्तं' मनोज्ञम् ॥ [ १ ]

भवभवभयदाऽभयदावली बलीयोदयोदयाऽमायामा ।
दद्याद्ऽद्याऽमितमितशमा शमादिष्टदिष्टवीजाऽवीजा ॥ २ ॥

भवेति ॥ 'अभयदावली' तीर्थकरश्रेणिः अद्य 'अमितम्' अपरिमितं 'शं' सुखं दद्यात् । कीदृशी ? भवभवं संसारसमुत्थं भयं द्यति—खण्डयति या सा । पुनः किम्० ? बलीयान्—प्रबलोऽपकारिष्वपि अनिरुद्धप्रसरत्वाद् दयोदयः करुणासमुद्रो यस्याः सा । पुनः किम्० ? नास्ति माया—कपटम् आमः—रोगश्च यस्याः सा । पुनः किंम्० ? इतः—प्राप्तः शमः—समतापरिणामो यया सा । पुनः किम्० ? आदिष्टं—प्रवृत्तिनिवृत्त्यर्थमुपदिष्टं दिष्टवीजम्—अदृष्टहेतु कर्म यया सा । पुनः किम्० ? 'अवीजा' वीजमिव वीजं—संसारहेतुत्वाद् रागद्वेषपरिणतिर्नास्ति तद् यस्याः सा ॥ [ २ ]

दमदमऽसुगमं सुगमं, सदा सदानन्दनं दयाविद्याविद् ।
परमऽपरमऽस्मर ! स्मर, महामहा धीरधी रसमयं समयम् ॥ ३ ॥

दमदमिति ॥ 'हे अस्मर !' कन्दर्परहित ! त्वं 'सदा' नित्यं 'समयं' सिद्धान्तं 'स्मर' स्मृतिविषयीकुरु । अस्मरेत्यामन्त्रणेन स्मरोपप्लुतचित्तस्यानधिकारित्वं सूचितम् । कीदृशम् ? दमं—इन्द्रियजयं ददाति

"इंदियाइं जहामागं दमइत्ता मुणी चरे ।"

इत्याद्युपदेशाद् यस्तम् । पुनः की० ? 'असुगमं' नयभङ्गादिगहनतया दुर्गमम् । पुनः *की० ? [ 'सुगमं' ] सुष्ठु—शोभनाः गमाः सदृशपाठा यत्र तम् । पुनः की० ? सतां—उत्तमानां आनन्दनं—हर्षकारणम्—पुनः की० ? 'परं' प्रकृष्टम्, सकलशास्त्रातिशायित्वात् । पुनः की० ? 'अपरं' नास्ति परः—शत्रुर्यस्य तम् । पुनः की० ? 'रसमयं' प्रकृष्टशान्तरसम् । त्वं किम्भूतः ? 'दयाविद्याविद्' दयाविद्यां—अहिंसाप्रतिपादकं शास्त्रं वेत्ति—जानाति यः सः । अहिंसाविधिज्ञस्यैव समयज्ञानोत्कर्षदर्शनादत्यादरसम्भावनार्थमिदं विशेषणम् । पुनः किम्भूतस्त्वम् ? 'महामहाः' महातेजाः । पुनः किम्भूतः ? धीरा—दृढसम्यक्त्वोपबृंहितत्वेनाक्षोभ्या धीः बुद्धिर्यस्य सः । धीराणां धीरसः—बुद्धिरसो यत्रेति समयस्यैव वा विशेषणम् । अस्मिन् पक्षे 'अयं' इति विशेषणस्य कार्ये कारणोपचाराद् इष्टमायजनकमित्यर्थः [ इति समयस्यैव विशेषणम् ] ॥ [ ३ ]

काली कालीरऽसरसभावाभावाय नयनसुखदाऽसुखदा ।
महिमहितनुता तनुतादितादितामानमानरुच्या रुच्या ॥ ४ ॥

इति श्रीसुमतिजिनस्तुतिः ॥ ५ ॥

* 'की०' कीदृशी, इत्यस्य सङ्केतः ॥ १ समये तदुत्कर्ष° की० ॥ २ धीराणां धनस्तेषु स्थिरस्तेन तेऽपि समयस्यैकाविशेषणम् । सा० सु० ॥ ३ विशेषणम् । अयमिति चामन्त्र्यस्य 'अयम्' इष्टमायं कार्ये कारणोपचारादिति समयस्यैव वा । की० ॥

कालीति ॥ कालीनाम्नी देवी 'असरसभावाभावाय'[1] विरसभावापनयनाय 'काली:' सुखाली: 'तनुतात्' कुरुतात्। न च 'एवं वैरस्यापनयनकामनया सुखस्य काम्यत्वात् तस्य निरुपाधिककामनाविषयत्वभङ्गः' इति शङ्कनीयम्, सुखहेतुविषयोपनिपातस्यैवात्र काम्यत्वात्, मुख्यसुखस्य तथात्वाविरोधात्। काली कीदृशी? नयनयोः—लोचनयोः सुखदा—सातदायिनी। पुनः की० ? असुखं—दुःखं द्यति—खण्डयति या सा। पुनः की० ? महिभिः—उत्सवैर्भिर्महिता—पूजिता चासौ नुता स्तुता च महिभिर्ये महिताः तैः नुतेति वा। महिमहिताभ्यां महत्त्वपथ्याभ्यां तद्गुणपुरस्कारेणेत्यर्थः नुता स्तुता प्राणिभिरिति गम्यत इति वा। पुनः की० ? इतः—प्राप्तोऽदितः—अखण्डितः अमानः—अपरिमितो यो मानः—अहङ्कारः पूजा वा तत्र या रुचिः—अभिलाषः तया कृत्वा रुच्या मनोज्ञा। अथवा इता—प्राप्ता अदिता—अखण्डिता अमाना—अपरिमिता मा—लक्ष्मीर्यया सा। पुनः की० ? 'रुच्या' कान्त्या 'न अरुच्या' नाऽमनोज्ञेति व्याख्येयम् ॥ [ ४ ]

इति श्रीसुमतिजिनस्तुतिविवरणम् ॥ ५ ॥

## ६—श्रीपद्मप्रभजिनस्तुतिः

[ वसन्ततिलका ]

**पद्मप्रभेश ! तव यस्य रुचिर्मते सद्विश्वासमानसदयापर[2] ! भावि तस्य ।**
**नोच्चैःपदं किमु पचेलिमपुण्यसम्पद्, विश्वासमान ! सदयाऽपर ! भावितस्य ॥ १ ॥**

पद्मप्रभेशेति ॥ हे 'सद्वि० पर !' सन्—शोभनः अश्रद्धयाऽनभिभवनीयो विश्वासः—जिनवचनप्रामाण्यप्रतिपत्तिस्वरसो यत्र एतादृशं मानसम्—अन्तःकरणं येषां तेषु दयापरः—करुणातत्परः, दयां पिपर्त्ति वा यः तस्याऽऽमन्त्रणम्। यद्यपि भगवतः सर्वेष्वपि जीवेषु अविशेषेण कृपालुत्वात् कृपाऽस्त्येव, अन्यथा माध्यस्थ्यहानिप्रसङ्गात्, तथापि येषु तत्फलं मोक्षलक्षणमभ्युदयति तत्रैव परमार्थतः सा, न त्वन्यत्रापीति[3] निश्चयाश्रयणादित्थमुक्तम्। हे 'विश्वासमान' विश्वे—जगति असमानः—निरुपमानः तस्याऽऽमन्त्रणम्, हे 'सदय !' सत्—शोभनम् अयम्—इष्टदैवं यस्य तस्यामन्त्रणम्, हे 'अपर !' नास्ति परः—शत्रुर्यस्य नास्ति परः—उत्कृष्टो वा यस्मात् तस्यामन्त्रणम्, हे 'पद्मप्रभेश !' पद्मप्रभस्वामिन् ! 'यस्य' पुंसः तव 'मते' शासने 'रुचिः' श्रद्धा अस्तीति शेषः, तस्य उच्चैः[4]—उत्कृष्टं पदं सुदेवत्वं मोक्षो वा किमु 'न भावि' न भविष्यति ? अपि तु भाव्येवेत्यर्थः। कीदृशस्य तस्य ? 'भावितस्य' भावो जातोऽस्यास्तीति भावितः तस्य वासितस्य। पदं किम्भूतम् ? पचेलिमा—परिपक्वा पुण्यसम्पत्—शुभप्रकृतिसमृद्धिः पुण्या—पवित्रा वा सम्पत्—शाश्वतानन्दरूपा यत्र तत् ॥ [ १ ]

१ "असरसभावस्य—दौर्जन्यस्य अभावाय—अपनयनाय" इत्यवचूरिः ॥ २ दयामर। य० पु० ॥ ३ °त्रापि, न खलु कुशूलनिहित बीजं निश्चयनिपुणा बीजमामनन्ति, किन्तु कुर्वदेवाङ्कुरमित्याद्यध्यवसेयम्। की० ॥ ४ 'उच्चैःपदं' सुदेवत्वमोक्षादिलक्षणमुत्कृष्टपदं किमु सा० ॥

**मूर्त्तिः शमस्य दधती किमु या पटूनि, पुण्यानि काचन सभासु रराज नव्या ।**
**सा स्तूयतां भगवतां विततिः स्वभक्त्या, पुण्याऽनिकाचन ! सभा सुरराजनव्या ॥२॥**

मूर्त्तेरिति ॥ हे 'अनिकाचन[1]' निकाचनं नाम सकलकरणायोग्यत्वेन कर्मबन्धव्यवस्थापनम्, तच्चात्र मिथ्यात्वविषयं गृह्यते, ततो नास्ति निकाचनमस्येत्यनिकाचनः तस्यामन्त्रणम् । एतेन निकाचितमिथ्यात्वमोहाः पुमांसोऽनामन्त्रणीया एव, तेषां भगवद्भजनानधिकारित्वात्; अचिन्त्यचिन्तामणिलाभकल्पं खल्वेतत्, नाऽतो मन्दभागधेयानां तेषामेतल्लाभ इति व्यज्यते । त्वया सा 'भगवतां' तीर्थकृतां 'विततिः' श्रेणिः स्तूयताम् । कया ? 'स्वभक्त्या' आत्मीयश्रद्धया, परानुवृत्त्या तु तस्या द्रव्यस्तुतिमात्रत्वेनाल्पफलत्वात् । कीदृशी ?[2] 'पुण्या' पवित्रा । पुनः की० ? 'सभा' सह भया—लक्षणया प्रशस्तकान्त्या वर्तत इति सभा, नाऽतोऽपुष्टार्थकत्वम् । पुनः की० ? सुरराजैः—देवेन्द्रैः नव्या—स्तव्या । सह भैः नक्षत्रैर्वर्तन्ते ये ते सभाः ते च तेऽसुरराजाः—असुरेन्द्राश्च तैः नव्या—स्तव्या इत्येकमेव वा विशेषणम् । सा का ? या 'पटूनि' प्रौढानि 'पुण्यानि' शुभकर्माणि 'दधती' विपाकानुभवेन पुष्णती 'सभासु' पर्षत्सु 'रराज' शुशुभे । 'किमु' उत्प्रेक्षे—'शमस्य' शान्तरसस्य 'नव्या' नवीना 'काचन' अनिर्वचनीया 'मूर्त्तिः' तनुः ॥ [ २ ]

**लिप्सुः पदं परिगतैर्विनयेन जैनीं, वाचं यमैः सततमञ्चतु रोचितार्थाम् ।**
**स्याद्वादमुद्रितकुतीर्थ्यनयावतारां, वाचंयमैः सततमं चतुरोचितार्थाम् ॥ ३ ॥**

लिप्सुरिति ॥ सह ततया—विस्तीर्णया भया लक्ष्म्या वर्तते यत् तत् सततमम्, सह तया—लक्ष्म्या वर्तते यत् तत् सतम्, अतिशयितं सतं सततममिति वा, 'पदं' सुदेवत्वलक्षणं 'लिप्सुः' लब्धुमिच्छुः पुरुषः 'जैनीम्' आर्हतीं 'वाचं' सरस्वतीं 'सततं' निरन्तरम् 'अञ्चतु' पूजयतु । केन ? विनयेन, अविनयेन पूजनं तु परमार्थतोऽपूजनमेवेति भावः । जैनीं वाचं किम्भूताम् ? रोचितः—श्रद्धितोऽर्थः—प्रतिपाद्यविषयो यस्याः सा ताम् । कैः ? 'वाचंयमैः' श्रमणैः । किम्भूतैः ? 'यमैः' अहिंसासत्यास्तेयब्रह्माकिञ्चन्यलक्षणैर्महाव्रतैः 'परिगतैः' आश्रितैः । पुनः किम्भूताम् ? स्याद्वादेन यथास्थानं द्रव्यार्थिकपर्यायार्थिकनयार्पणोपनीतसप्तभङ्ग्यात्मकवाक्येन मुद्रिताः—प्रतिहतोत्थानाः कुतीर्थ्यानां—बौद्धादीनां नयानाम्—ऋजुसूत्रादीनाम् अवताराः—उपन्यासविशेषाः यथा सा तथा ताम् । पुनः कीदृशीम् ? चतुराणां सुपरिज्ञातहेयोपादेयानाम् उचितः—योग्यः अर्थः—पुमर्थो यस्याः[3] सकाशात् ताम् ॥ [ ३ ]

**साहाय्यमत्र तनुषे शिवसाधने याऽपीता मुदा रसमयस्य निरन्तराये ! ।**
**गान्धारि ! वज्रमुशले जगतीं तवाऽस्याः, पातामुदारसमयस्य निरन्तराये ! ॥ ४ ॥**

इति श्रीपद्मप्रभजिनस्तुतिः ॥ ६ ॥

साहाय्यमिति ॥ हे 'निरन्तराये !' निर्गता अन्तरायाः—प्रत्यूहा यस्याः सकाशात् तस्या आमन्त्रणम् । पुनः हे 'निरन्तराये !' निरन्तरः—अप्राप्तविच्छेद आयः लाभो यस्याः आमन्त्रणम् सा तस्या

१ न व्यवस्थिताना कर्मणां बन्धः । तच्चात्र की० ॥ २ 'भगवतां विततिः कीदृशी ?' इति ज्ञेयम् ॥ ३ यस्याः सा तथा ॥ ३ ॥ सा० ॥

हे गान्धारि ! अस्यास्तव वज्रमुशले 'जगतीं' पृथिवीं 'पातां' रक्षताम् । अस्याः कस्याः ? या त्वम् 'अत्र' जगति 'रसमयस्य' प्रकृष्टशान्तरसस्य 'उदारसमयस्य' स्फारसिद्धान्तस्य 'शिवसाधने' मोक्षसम्पादने निरुपद्रवोपाये वा 'मुदा' हर्षेण 'साहाय्यम्' एककार्यनिर्वर्त्तनप्रवणतां 'तनुपे' कुरुपे भवति हि पुरुषप्रवृत्तौ श्रुतमिव देवता प्रसादोऽप्युपकारीत्येवमुक्तम् । त्वं कीदृशी ? 'अपाता' पातरहिता ॥ [ ४ ]

इति श्रीपद्मप्रभस्तुतिविवरणम् ॥ ६ ॥



# ७–श्रीसुपार्श्वजिनस्तुतिः

[ मालिनी ]

**यदिह जिन ! सुपार्श्व ! त्वं निरस्ताकृतक्ष्मावनमद ! सुरवाऽधा हृद्यशोभाऽवतारम् ।**
**तत उदितमजस्रं कैर्बुधैर्गीयते नाऽवनमदसुर ! बाधाहृद् ! यशो भावतारम् ॥ १ ॥**

यदिहेति ॥ हे 'निरस्ताकृतक्ष्मावनमद !' क्ष्मायाः–पृथिव्याः "तात्स्थ्यात् तद्व्यपदेशः" इति न्यायात् पृथिवीवृत्तिलोकानां अवनं–रक्षणं क्ष्मावनम्, अकृतम्–अविहितं क्ष्मावनं येन, जात्यादिमदानां प्रेत्य हीनजात्यादिप्राप्तिफलकत्वप्रतिपादनात्, तादृशो यो मदः–'अहमुत्तमजातिमान्' इत्याद्यवलेपः सोऽकृतक्ष्मावनमदः, निरस्तोऽकृतक्ष्मावनमदो येन तस्यामन्त्रणम् । हे 'सुरव !' सुष्ठु–शोभनः संस्कारवत्त्वादिगुणोपेतत्वाद् रवः ध्वनिर्यस्य तस्यामन्त्रणम् । हे 'अवनमदसुर !' अवनमन्तः–प्रणमन्तोऽसुराः–दनुजा यस्य तस्यामन्त्रणम् । हे 'बाधाहृत् !' बाधां–शारीरमानसाद्यनेकभेदभिन्नं दुःखं हरतीति बाधाहृत् तस्यामन्त्रणम् । हे 'हृद्यशोभ !' मनोहरश्रीक ! । हे सुपार्श्वजिन ! त्वं 'इह' जगति यदिति वाक्यार्थकर्म 'अवतारं' जन्म 'अधाः' धृतवान् 'ततः' तस्मात् 'उदितम्' उत्पन्नं यशः 'कैर्बुधैः' कैः पण्डितैः 'अजस्रं' निरन्तरं भावेन[1]–श्रद्धया तारम्–उच्चैर्यथा स्यात् तथा न गीयते ? [2]सर्वैरपि परोपकारसारत्वदवतारजनितं यशो विचित्रचरित्रप्रबन्धेन गीयत इति भावः ॥ [ १ ]

**जगति शिवसुखं ये कान्तिभिर्भासयन्तो-**
**ऽदुरितमदरतापध्यानकान्ताः सदाऽऽशाः ।**
**जिनवरवृषभास्ते नाशयन्तु प्रवृद्धं,**
**दुरितमदरतापध्यानकान्ताः सदाशाः ॥ २ ॥**

जगतीति ॥ ते जिनवरवृषभाः 'प्रवृद्धं' बहुभवोपचितं 'दुरितं' ज्ञानावरणीयादिदुष्टविपाकं कर्म 'नाशयन्तु' क्षपयन्तु । किम्भूताः ? न स्तो दरतापौ–भयोपतापौ [3]येस्मात्, शुक्लध्यानोदये इहलोकादिभयानाम् आध्यात्मिकाऽऽधिदैविकाऽऽधिभौतिकभेदभिन्नस्य तापस्य चापगमात्, तादृशं यद् ध्यानं–शुक्लाख्यं तेन कान्ताः–मनोज्ञाः । यद्यपि ध्यान चिन्ताख्य कैवल्यदशायां नास्ति तथापि दृढप्रवृत्तिलक्षणं तत् तदाप्यस्त्येवेति नानुपपत्तिः । तदिदमुक्तम्

सुदढप्पयत्तवावारणं णिरोहो व विज्जमाणाणं ।
झाणं करणाण मयं ण उ चित्तणिरोहमेत्तागं ॥" इति ।

1 "भावेन तारम्–उज्ज्वलम्" इति यशो-विशेषणतयाऽप्यवचूर्याम् ॥ २ सर्वैरपि गीयत इति काकुलभ्योऽर्थं ॥ १ ॥ की० ॥ ३ यस्मिन् एतादृशं यद् ध्यानं–शुक्लाख्य तेन कान्ता.–मनोज्ञा. । पुन. किम्० ? सती सा० ॥

पुनः किम्० ? सती—शोभनाऽऽशा येषाम्, सताम्—उत्तमानां आशा वा येषु ते, सर्वस्यैवोत्तमकार्यस्य परमार्थतस्तीर्थङ्करोद्देश्यकत्वादिति भावः । ते के ? ये 'जगति' विश्वे 'शिवसुखं' निर्वाणशर्म 'अदुः' दत्तवन्तः । किम् कुर्वन्तः ? 'कान्तिभिः' किरणैः 'सदा' निरन्तरम् 'आशाः' दिशः 'भासयन्तः' शोभयन्तः । पुनः किम्० ? इताः—गताः मदः—जात्यादिस्मयो रतं—निधुवनम् अपध्यानं च—आर्त्तरौद्रद्वन्द्वं कान्ता च—वामाक्षी च येभ्यः, इता—गता वा मदरतानामपध्यानं यस्याः सकाशात् तादृशी कान्ता येभ्यस्ते तथा ॥ [ २ ]

मुनिततिरपठद् यं वर्जयन्ती हतोद्य-
त्तमसमऽहितदाऽत्रासाऽऽधिमाऽऽनन्दिताऽरम् ।
समयमिह भजाऽऽप्तेनोक्तमुच्चैर्दधानं,
तमऽसम ! हितदात्रा साधिमानं दितारम् ॥ ३ ॥

मुनिततिरिति ॥ हे 'असम !' निरुपमपुरुष ! त्वम् 'इह' जगति तं 'समयं' सिद्धान्तं 'भज' अङ्गीकुरु । किं कुर्वन्तम् ? उच्चैः 'साधिमानं' चारुभावं 'दधानं' बिभ्रतम् । पुनः किम्भूतम् ? 'आप्तेन' भगवता 'उक्तं' भाषितम् । कीदृशेनाऽऽप्तेन ? 'हितदात्रा' पथ्यप्रदायिना । पुनः किम्भूतम् ? दितं—खण्डितम् आरम्—अरिसमूहो येन तम् । तं कम् ? यं 'मुनिततिः' यतिश्रेणिः 'अपठत्' अभाणीत्, किं कुर्वती ? 'आधिं' मानसीं व्यथां 'वर्जयन्ती' त्यजन्ती, **'नहि सति आधिलेशेऽपि श्रुतपाठो भवति प्रभवति वा कार्याय'** इत्येवमुक्तम् । यं किम्भूतम् ? हतं—क्षपितम् उद्यद्—उत्पद्यत् तमः—पाप येन तम् । मुनिततिः किम्भूता ? अहितम्—अपथ्यं भावारिं वा द्यति—खण्डयति या सा । पुनः किम्भूता ? 'अत्रासा' नास्ति त्रासः भयं यस्याः सा । पुनः किम्० ? 'अरम्' अत्यर्थम् 'आनन्दिता' सन्तुष्टा ॥ [ ३ ]

अवतु करिणि याता साऽर्हतां प्रौढभक्त्या,
मुदितमकलितापाया महामानसी माम् ।
वहति युधि निहत्याऽनीकचक्रं रिपूणा-
मुदितमकलितापा या महामानसीमाम् ॥ ४ ॥

इति श्रीसुपार्श्वजिनस्तुति. ॥ ७ ॥

अवत्विति ॥ सा महामानसी माम् 'अवतु' रक्षतु । किम्भूता ? 'करिणि' हस्तिनि 'याता' प्राप्ता । पुनः किम्भूता ? अकलितः—अप्राप्तः अपायः [1]विघ्नोऽपत्त(?न)इलाभो वा यया सा । मां किम्भूतम् ? 'अर्हतां' तीर्थकृतां 'प्रौढभक्त्या' तीव्रभावनया 'मुदितं' प्राप्तहर्षम् । सा का ? या 'युधि' सङ्ग्रामे 'उदितम्' उत्थितं 'रिपूणां' शत्रूणाम् 'अनीकचक्रं' सेनासमूहं 'निहत्य' विजित्य 'महामानसीमाम्' अवलेपनपराकाष्ठां 'वहति' बिभर्ति, सीमाशब्द [2]आकारान्तोऽप्यस्ति । 'निहत्य' इत्यनेन फलोक्तिः, फलप्राप्तिपूर्वकाहङ्कारस्य नैःफल्यं निरस्तम् । या किम्भूता ? 'अकलितापा' रणानुशयरहिता कलियुगकृततापरहिता वा ॥ [ ४ ]

इति श्रीसुपार्श्वजिनस्तुतिविवरणम् ॥ ७ ॥

१ विघ्नमपत्त° सा० । २ "अन्तोऽवसानं सीमा च, मर्यादापि च सीमनि ।" [अभि० चिन्ता० का. ४. श्लो० २८] ॥

# ८ श्रीचन्द्रप्रभजिनस्तुतिः

[ मन्दाक्रान्ता ]

तुभ्यं चन्द्रप्रभ ! भवभयाद् रक्षते लेखलेखा-
नन्तव्याऽपापमदमहृते ! सन् ! नमोऽहासमाय ! ।
श्रेयःश्रेणीं भृशमसुमतां तन्वते ध्वस्तकामा-
नन्तव्यापाऽपमद ! महते सन्नमोहाऽसमाय ॥ १ ॥

तुभ्यमिति ॥ हे 'सन् !' उत्तम ! । हे 'लेखलेखानन्तव्य !' देवश्रेणीप्रणमनीय ! । हे 'अदमहृते !' दमस्य—इन्द्रियजयस्य हृतिः[1]—परिणामापकर्षो दमहृतिः, नास्ति सा यस्य तस्याऽऽमन्त्रणम् । हे 'अहासमाय !' हासः—हास्यमोहजनित उत्फुल्लगल्लादिविकारव्यङ्ग्यः परिणामो माया च—वञ्चना हासमाये, न स्तः ते यस्य तस्याऽऽमन्त्रणम् । हे 'ध्वस्तकामानन्तव्याप !' ध्वस्तः—निरस्तः कामस्य—कन्दर्पस्य अनन्तः—अपर्यवसितो व्यापः—व्यासक्तता येन तस्याऽऽमन्त्रणम् । हे 'अपमद !' अपगतो मदः—जात्याद्यवलेपो यस्मात् तस्यामन्त्रणम् । हे 'सन्नमोह !' सन्नः—विशीर्णो मोहः—"गोबलीवर्द"न्यायात् हास्यादिभिन्नमोहनीयप्रकृतिजनितपरिणामसमूहो अज्ञानं वा यस्य तस्यामन्त्रणम् । हे चन्द्रप्रभ ! तुभ्यं नमः, 'अस्तु' इति शेषः । तुभ्यं किं कुर्वते ? 'भवभयात्' संसारसाध्वसाद् 'अपापं' पापरहितं पुरुषं रक्षते, न च 'तस्य किं रक्षणे पौरुषम् ? स्वत एव तेन संसारत्यागात्' इति शङ्कनीयम्, त्यक्तसंसाराणामपि परिणामानपकर्षकस्य हृदयस्थितभगव-माहात्म्याधीनत्वाद् इत्थमेवास्य क्षेमकारित्वं युक्तमित्यवधेयम् । पुनः किम्० ? 'भृशम्' अत्यर्थम् 'असुमतां' प्राणिनां 'श्रेयःश्रेणीं' कल्याणमालां 'तन्वते' कुर्वते । पुनः किम्भूताय ? 'महते' [2]अनुपकृतोपकारित्वेनोत्तमोत्तमपुरुषप्रकृतिशालिने, एवञ्च सहजदानप्रियत्वादिगुणशालित्वरूपसत्त्वाद् महत्त्वं भिन्नमिति पौनरुक्त्यं परिहृतं द्रष्टव्यम् । पुनः किम्भूताय ? 'असमाय' निरुपमाय ॥ [ १ ]

श्रेयो दत्तां चरणविलुठन्नम्रभूपालभूयो-
मुक्तामालाऽसमदमहिता बोधिदानामहीना ।
मोहापोहादुदितपरमज्योतिषां कृत्स्नदोषै-
र्मुक्ता मालाऽसमदमहिता वोऽधिदानाऽऽमहीना ॥ २ ॥

श्रेय इति ॥ 'बोधिदानां' तीर्थकृतां 'माला' श्रेणिः 'वः' युष्माकं 'श्रेयः' कल्याणं दत्ताम् । किम्भूता ? चरणयोः—पादयोः विलुठन्ती नम्रभूपालानां—नमनशीलनृपतीनां भूयसी—वह्वी मुक्तामाला—मुक्ताफलश्रेणिर्यस्याः सा । पुनः किम्० ? असमदमानां—निरुपमेन्द्रियजयानां पुंसां हिता—हितकारिणी अकारप्रश्लेषात्, समे—सकले असमे—[3]असपरिच्छेदे वा दमहिते यस्याः सा । पुनः किम्० ? 'अहीना' नास्ति हीनं न्यूनं यस्याः, क्षीणलाभान्तरायत्वेन कृतकृत्यत्वात्, 'अहीना' अनुत्तमेति तु न तादृगर्थं पुष्णाति । पुनः किम्० ? कृत्स्नदोषैः—घातिकर्मजनितैरन्तरायादिभिः सकलैर्जीवगुणप्रतिपन्थिपरिणामैः

१ हृति'—अपकर्षो सा० ॥ २ निरनुबन्धकार्यकारि° की० ॥ ३ अपरि° सा० ॥

'मुक्ता' त्यक्ततादात्म्यसम्बन्धा । पुनः किम्० ? असमदैः—असाहङ्कारैः महिता—पूजिता, असमदा—मदेन सहैकार्थसमवायसम्बन्धविधुरा वा महिता—उत्सविता यस्याः सा, भगवतः पूजासत्कारप्राचुर्येऽपि तदुपबृंहणाभावेन मदलेशस्याप्यभावात् । तथा चार्षम् "णो पूजासक्कारे उववूहित्ता भवइ" इति । पुनः किम्० ? अधि—अधिकं सकलभुवनवर्तिदानशौण्डातिशायि दानं सांवत्सरिकादि अभयादि वा यस्याः सा । पुनः किम्० ? 'आमहीना' रोगरहिता । बोधिदानां किम्भूतानाम् ? 'मोहापोहात्' मोहनीयकर्मक्षयात् उदितं—उत्पन्नं परमं—प्रकृष्टं ज्योतिः—ज्ञानं केवलाख्यं येषां तेषाम् ॥ [ २ ]

**रङ्गद्भङ्गः स्फुटनयमयस्तीर्थनाथेन चूला-**
**मालापीनः शमदमवताऽसङ्गतोपायहृद्यः ।**
**सिद्धान्तोऽयं भवतु गदितः श्रेयसे भक्तिभाजा-**
**माऽऽलापी नः शमदमवता सङ्गतोऽपायहृद्यः ॥ ३ ॥**

रङ्गद्भङ्ग इति ॥ 'तीर्थनाथेन' अर्हता 'गदितः' उक्तः अयं सिद्धान्तः 'भक्तिभाजां' सेवापराणां 'नः' अस्माकं 'श्रेयसे' कल्याणाय भवतु । किम्भूतः ? रङ्गन्तः—परस्परानुप्रवेशेन उल्लसन्तो भङ्गाः—वचनविकल्पा यत्र सः । पुनः किम्० ? स्फुटाः—प्रकटा ये नयाः—नैगमादयः तन्मयः—प्रचुरतद्वान् । पुनः किम्भूतः ? चूलामालया—चूलिकाश्रेण्या पीनः—पुष्टः । पुनः किम्० ? असङ्गतायाः—निस्सङ्गताया य उपायः—रत्नत्रयसाम्राज्यं तेन हृद्यः मनोहरः । पुनः० किम् ? 'आलापी' आलापकवान् । 'भक्तिभाजाम्' इति, सानुस्वार[2]च्छेदे च मां—लक्ष्मीं लापयति—आकारयतीत्येवंशील इति व्याख्येयम् । पुनः किम्० ? 'सङ्गतः' प्रसङ्गादिसङ्गतिमान् । अयं कः ? यः 'अपायहृत्' विघ्नहर्ता, अस्तीति शेषः । तीर्थनाथेन किम्भूतेन ? शमः—क्षान्तिः दमश्च—पञ्चेन्द्रियजयः तौ विद्येते यस्याऽसौ तद्वान् तेन । किं कुर्वता ? 'अवता' रक्षता । कम् ? 'शमदं' क्षान्तिदायिनं पुमांसम् ॥ [ ३ ]

**सा त्वं वज्राङ्कुशि ! जय मुनौ भूरिभक्तिः सुसिद्ध-**
**प्राणायामेऽशुचि मतिमताऽऽपाऽऽपदन्ताऽवलानाम् ।**
**दत्से वज्राङ्कुशभृदनिशं दर्पहन्त्री प्रदत्त-**
**प्राणा या मे शुचिमतिमता पापदन्तावलानाम् ॥ ४ ॥**

इति श्रीचन्द्रप्रभजिनस्तुतिः ॥ ८ ॥

सा त्वमिति ॥ हे वज्राङ्कुशि ! सा त्वं जय । किम्भूता त्वम् ? 'भूरिभक्तिः' विपुलभक्तिमती । क्व ? 'मुनौ' साधौ । कीदृशे ? सुष्ठु—अतिशयेन सिद्धः—जातपरिकर्मा प्राणायामः—विधिवच्छ्वासप्रश्वासरोधव्यापारो यस्य तस्मिन् । पुनः किम्० ? 'अशुचि' नास्ति शुक्—शोको यस्य तस्मिन् । सा का ? या त्वं 'मे' मम ( मह्यं ) 'मतिं' बुद्धिं दत्से । त्वं किम्० ? 'अतापा' तापरहिता । पुनः किम्भूता ? आपदो अन्तो

१ मदादिहित्वविधुरा महिता० स्या सेति वा भग० येऽपि तं उपबृंहणेऽभावेन मद० चार्षे० सा० ॥ २ °स्पाठे वा सा० । अत्रार्थे "भक्तिभाजा मालापी" इति स्तुतिपाठो ज्ञेय ॥

यस्याः सकाशात् सा । पुनः किम्भूता ? 'प्रदत्तप्राणा' प्रदत्तबला, केषाम् ? 'अबलानां' बलरहितानां पुंसाम् । पुनः किम्० ? 'अनिशं' निरन्तरं 'वज्राङ्कुशभृत्' कुलिशाङ्कुशधारिणी । पुनः किम्० ? 'दर्पहन्त्री' गर्वनाशिनी । केषाम् ? पापा एव ये दन्तावलाः—हस्तिनस्तेषाम्, अत एवात्र "वज्राङ्कुशभृत्" इति सहेतुकं विशेषणम् । पुनः किम्० ? शुचिमतीनां—निर्मलबुद्धीनां मता—आराध्यत्वेन अभीष्टा ॥ [ ४ ]

इति श्रीचन्द्रप्रभजिनस्तुतिविवरणम् ॥ ८ ॥



## ९—श्रीसुविधिजिनस्तुतिः

[ उपजातिः ]

**यस्याऽतनोद् देवततिर्महं सुप्रभाऽवतारे शुचिमन्दरागे ।**
**इहाऽस्तु भक्तिः सुविधौ दृढा मे, प्रभावतारेऽशुचि मन्दरागे ॥ १ ॥**

यस्याऽतनोदिति ॥ 'इह' अस्मिन् 'सुविधौ' सुविधिनाथे 'मे' मम 'दृढा' निबिडा भक्तिरस्तु । किम्भूते ? प्रभावेन—अनुभावेन तारे, प्रभावश्च ता च प्रभावते ते रातीति प्रभावतारः तस्मिन्, प्रकृष्टो भावः—चित्ताध्यवसायो येषां ते प्रभावास्तान् तारयति संसारसागरपारं प्रापयति यः तस्मिन्निति वा । पुनः किम्० ? 'अशुचि' शोकरहिते । पुनः किम्० ? 'मन्दरागे' स्वभावत एव दुरुदर्कविषयानुबन्धसम्बन्धविधुरे । इह क्व ? यस्य 'अवतारे' जन्मनि 'देवततिः' विबुधश्रेणिः शुचिः—निर्मलो यो मन्दरः मेरुः स एव अगः—पर्वतः तत्र 'महं' उत्सवम् 'अतनोत्' अकरोत् । किम्भूता देवततिः ? सु—शोभना प्रभा—कान्तिर्यस्याः सा ॥ [ १ ]

**अभूत् प्रकृष्टोपशमेषु येषु, न मोहसेना जनितापदेभ्यः ।**
**युष्मभ्यमाऽऽप्ताः ! प्रथितोदयेभ्यो, नमोऽहसेनाः ! जनितापदेभ्यः ॥ २ ॥**

अभूदिति ॥ भोः 'अहसेनाः !' नास्ति हसः—हास्यमेतेषामिति अहसाः—केवलिनः, उक्तं च

"केवली णं भंते ! हसेज्ज वा उस्सुआएज्ज वा ? गो० ! णो इणट्ठे समट्ठे"

इति, तेषामिनाः स्वामिनः, कृतकृत्यानामपि तेषां व्यवहारानुरोधेन प्रणमनीयत्वात्, तेषामामन्त्रणम् । भोः 'आप्ताः !' तीर्थकृतः ! एभ्यो युष्मभ्यं नमः, 'अस्तु' इति शेषः । युष्मभ्यं किम्भूतेभ्यः ? प्रथितः—प्रसिद्धः उदयः अतिशयो ज्ञानं वा येषां तेभ्यः । पुनः किम्० ? जनितापम्—आध्यात्मिकादिभेदभिन्नं संसारतापं घ्नन्ति—खण्डयन्ति ये तेभ्यः । एभ्यः केभ्यः ? येषु 'मोहसेना' जगद्विभवलुण्टाकमोहमहाराजचमूः 'जनितापत्' कृतव्यापद् नाऽभूत् । किम्भूतेषु येषु ? प्रकृष्टः—अतिशयित उपशमः—तितिक्षापरिणामो येषां तेषु, एवं च परप्रहरणक्रोधादिप्रतिघातजनकोपशमादिकवचालिङ्गितशरीरतया न तेषु मोहसेनायाः पराक्रमः सफलीभूत इत्युपमया भावो लभ्यते ॥ [ २ ]

**वाणी रहस्यं दधती प्रदत्तमहोदयाऽवद्भिरनीतिहारि ।**
**जीयाज्जिनेन्द्रैर्गदिता त्रिलोकीमहो ! दयावद्भिरनीति हारि ॥ ३ ॥**

वाणीति ॥ 'जिनेन्द्रैः' तीर्थकरैः 'गदिता' उक्ता 'वाणी' प्रवचनात्मिका भाषाद्रव्यसंहतिर्जीयात् । जिनेन्द्रैः किंकुर्वद्भिः ? 'अहो !' इत्याश्चर्ये । 'त्रिलोकीं' त्रिजगतीम् 'अवद्भिः' रक्षद्भिः । पुनः किम्० ? 'दयावद्भिः' करुणाशालिभिः । वाणी किं कुर्वती ? 'रहस्यं' सकलशास्त्रोपनिषद्भूतमर्थं 'दधती' भूयोभूयः कर्तव्यत्वप्रतिपादनेन पुष्णती । रहस्यं किम्भूतम् ? अनीतिम्—अन्यायं हरतीत्येवंशीलम् । पुनः किम्० ? 'अनीति' नास्ति ईतिर्यस्मात् तत् । पुनः किम्० ? 'हारि' मनोहरम् । वाणी किम्० ? प्रदत्तो महोदयः—मोक्षो यया सा ॥ [ ३ ]

[ उपेन्द्रवज्रा ]

**[3]ज्वालोज्ज्वलो विद्रुमकान्तकान्तिः, करोऽतुलाभं शमदम्भवत्याः ।**
**ददन्नतानां ज्वलनायुधे ! नः, करोतु लाभं शमदं भवत्याः ॥ ४ ॥**

इति श्रीसुविधिजिनस्तुतिः ॥ ९ ॥

ज्वालोज्ज्वल इति ॥ हे ज्वलनायुधे ! 'भवत्याः' तव 'करः' हस्तः 'नः' अस्माकं 'लाभं' कल्याणप्राप्तिं करोतु । लाभं किम्भूतम् ? अतुला—निरुपमा आभा—शोभा यस्मात् तम् । करः किम्भूतः ? ज्वालया—हेत्या उज्ज्वलः—देदीप्यमानः । पुनः किम्० ? विद्रुमवत्—प्रवालवत् पाटलत्वेन कान्ता मनोज्ञा कान्तिर्यस्य सः । किं कुर्वन् ? 'नतानां' कृतनतीनां पुरुषाणां 'शं' सुखं ददत् । शं किम्भूतम् ? 'शमदम्' उपशमप्रदम्, एतेन कुशलानुबन्धित्वमावेदितम् । भवत्याः कथम्भूतायाः ? 'अदम्भवत्याः' अकपटवत्याः ॥ [ ४ ]

इति श्रीसुविधि[2]जिनस्तुतिविवरण[3]म् ॥ ९ ॥

## १०–श्रीशीतलजिनस्तुतिः

[ द्रुतविलम्बितम् ]

**जयति शीतलतीर्थपतिर्जने, वसु मती तरणाय महोदधौ ।**
**ददति यत्र भवे चरणग्रहे, वसुमतीतरणाय महो दधौ ॥ १ ॥**

जयतीति ॥ स इत्यस्य गम्यमानत्वात् सः 'शीतलतीर्थपतिः' शीतलनामा भगवान् 'जयति' सर्वोत्कर्षेण वर्त्तते, जयत्यर्थेन च नमस्कार आक्षिप्यते । किम्भूतः ? 'मती' मतम्—इष्टं कृतकृत्यत्वादस्यास्तीति मती । स कः ? 'यत्र' यस्मिन् भवे महोदधौ इति व्यस्तरूपकम्, षष्ठीसप्तम्योरर्थं प्रत्यनतिभेदाच्च भवस्य महोदधेरित्यर्थः, 'तरणाय' पारगमनाय तदर्थमित्यर्थः, पारं गन्तुमिति तु नार्थः, वक्ष्यमाणविशेषण-

१ 'जगद्गति' सा०, एतत्पदटीका सा० सञ्ज्ञकप्रतौ 'जगतां गति—आधार' इति विद्यते ।
अन्तभागे स्वहस्ताक्षरीयैकश्लोकविभूषित–ऐन्द्रस्तुति–प्रतौ अन्यास्वपि च मूल–टीका-अवचूरिपुस्तकेषु भूम्ना 'ज्वालोज्ज्वलो' इति पाठो दृश्यते, अत स एव पाठस्तदनुसारिणी च की० सञ्ज्ञकप्रतिगता टीका मूले आदृते स्त । किञ्च श्रीसागरानन्दसूरिवरसत्कटीकाप्रतौ मूले टीकायां चापि 'जगद्गतिः' इति पाठ तदनुसारि च व्याख्यान दृश्यते, श्रीमद्भिश्च सागरानन्दसूरिभि स्वविरचितावचूर्यामेतत्पाठानुसारेणैव व्याख्यातमस्तीति 'जगद्गतिः' इति पाठोऽप्यादरणीयत्वेनावगन्तव्य ॥
२ °नाथ° सा० ॥ ३ °ण समाप्तम् सा० ॥

योगानुपपत्तेः । 'चरणग्रहे' महाव्रतप्रतिपत्त्यवसरे 'जने' लोके 'वसु' द्रव्यं ददति सति 'वसुमती' पृथिवी 'महः' तेजो दधौ, भवति हि भगवति सांवत्सरिकदानोद्यते निर्धनानामपि बहुवस्त्रालङ्कारादिलाभेन धनदायितत्वाद् गलितशोकैर्लोकैर्देवलोकवदनवरतमभिहततमिस्रप्रसरतया नित्यालोक एव भूलोक इति विभावनीयम् । तरणाय किम्भूताय ? 'इतरणाय' गतसङ्ग्रामाय ॥ [ १ ]

**वितर शासनभक्तिमतां जिनावलि ! तमोहरणे ! सुरसम्पदम् ।**
**अधरयच्छिवनाम महात्मनां, वलितमोहरणे ! सुरसं पदम् ॥ २ ॥**

वितरेति ॥ हे 'जिनावलि !' जिनश्रेणि ! हे 'तमोहरणे !' पापहारिणि ! हे 'वलितमोहरणे !' वलितौ उद्भ्रान्तौ मोहरणौ—अज्ञानसङ्ग्रामौ यया तस्या आमन्त्रणम् त्वं 'शासनभक्तिमतां' जिनप्रवचनश्रद्धारसिकहृदयानां महात्मनां 'शिवनाम' मोक्षाह्वयं पदं 'वितर' प्रयच्छ । पदं किम्० ? 'सुरसं' सु—शोभनो रसः—शान्ताख्यो यत्र तत्, यद्यपि विभावाद्यभिव्यङ्ग्यचिद्विवर्त्तरूपो रसो मोक्षेऽनुपपन्नः तथापि वास्तवानन्दरूपस्य तस्य तत्र नानुपपत्तिरिति ध्येयम् । किं कुर्वत् ? 'सुरसम्पदं' देवविभूतिम् 'अधरयत्' तिरस्कुर्वत्, मोक्षसुखस्य त्रैकालिकसकलसांसारिकसुखेभ्योऽप्यनन्तगुणत्वात् दुःखामिश्रितत्वेन प्रतिद्वन्द्विसम्बन्धविधुरत्वात् औत्सुक्यविनिवृत्त्या स्वभावापरावृत्तेश्चेति विभावनीयम् ॥ [ २ ]

**भगवतोऽभ्युदितं विनमाऽऽगमं, जन ! यतः परमापदमाऽऽदरात् ।**
**इह निहत्य शिवं जगदुन्नतिं, जनयतः परमाऽऽप दमादरात् ॥ ३ ॥**

भगवत इति ॥ हे जन ! त्वं तच्छब्दाध्याहारात् ततः 'भगवतः' तीर्थङ्करात् 'अभ्युदितं' साक्षादर्थतया परम्परया च सूत्रतया उत्पन्नं 'आगमं' सिद्धान्तं 'विनम' विशेषेण नमस्कुरु । कुतः ? 'आदरात्' श्रद्धापूर्वादभियोगात् । ततः कुतः ? 'यतः' यस्मात् 'इह' अस्मिन् भवे 'जगत्' "तात्स्थ्यात्तद्व्यपदेशः" इति न्यायाद् जगद्वर्ती लोकः 'परमापदं' कर्मोदयजनितामुत्कृष्टव्याबाधां 'निहत्य' औपक्रमिकवेदनीयोपहतोस्थानां हेतूच्छेदादनुत्थानोपहतां च विधाय 'परम्' उत्कृष्टं 'शिवं' मोक्षं 'आप' प्राप, परमा आपद् यस्मात् तादृशं 'परं' कामादिभावशत्रुं निहत्येति वा व्याख्येयम्, परा—प्रकृष्टा या मा लक्ष्मीः तस्याः पदं स्थानमिति विशेषणं वा । यतः किम्भूतात् ? 'दमादरात्' दमेन—इन्द्रियजयेन अदरः—निर्भयो दमादरः तस्मात् । किं कुर्वतः ? 'उन्नतिं' तीर्थप्रभावनां 'जनयतः' विदधतः ॥ [ ३ ]

**स्तवरवैस्त्रिदशैरव सन्ततं, न परमच्छविमानविलासिता ।**
**न धनशास्त्रकलाऽप्यरिदारिणी, न परमच्छवि ! मानवि ! लासिता ॥ ४ ॥**

इति श्रीशीतलजिनस्तुतिः ॥ १० ॥

स्तवरवैरिति ॥ हे 'परमच्छवि !' परमा—उत्कृष्टा छविः—कान्तिः यस्याः तस्या आमन्त्रणम्, हे मानवि ! । हे परमच्छविमानवीत्येकं वाऽऽमन्त्रणम् । 'सन्ततं' निरन्तरं 'त्रिदशैः' देवैः 'स्तवरवैः' स्तोत्रध्वनिभिः कृत्वा तव 'परं' केवल 'अच्छविमानविलासिता' स्वनिर्मलविमानविलासशालिता 'न लासिता' न स्फातिं आपिता, किन्तु 'धनशास्त्रकलाऽपि' निबिडशास्त्राभ्यासनिपुणताऽपि न न लासिता, 'द्वयोर्नञोः

१ 'पर' केवलं 'शिवं' की० ॥

प्रकृतार्थगमकत्वात्' लासितैवेत्यर्थः । किम्भूता ? 'अरिदारिणी' शत्रुविदारणनिबन्धनम्, एवं चोक्तगुणद्वयेनाऽऽराध्यत्वं व्यज्यते ॥ [ ४ ]

इति श्रीशीतलजिनस्तुतिविवरणम् ॥ १० ॥

## ११–श्रीश्रेयांसजिनस्तुतिः

[ हरिणी ]

जिनवर ! भजन् श्रेयांस ! त्वां व्रताम्बुहतोदय-
द्भवदव ! नतोऽहं तापातङ्कमुक्त ! महागम ! ।
गतभववनभ्रान्तिश्रान्तिः फलेग्रहिरुल्लस-
द्भवदवनतो हन्ताऽपातं कमुक्तमहागम ! ॥ १ ॥

जिनवरेति ॥ हे 'व्रताम्बुहतोदयद्भवदव !' व्रतमेव–अहिंसादि अम्बु–जलं तेन हतः–विध्यापित उदयन्–प्रवर्द्धमानो भवदवः संसारवनवह्निर्येन तस्यामन्त्रणम् । हे 'तापातङ्कमुक्त !' तापः–अनुशय आतङ्कश्च–भयं ताभ्यां मुक्तः–त्यक्तो यस्तस्यामन्त्रणम् । हे 'महागम !' महानाम्–उत्सवानाम् आगमः–पुण्यप्राग्भाराकृष्टतया स्वत उपनमनं[1] यस्य तस्यामन्त्रणम् । हे 'उक्तमहागम !' उक्तः–प्रतिपादितो महान्–सकलतन्त्रातिशायी आगमः–सिद्धान्तो येन तस्यामन्त्रणम् । हे 'जिनवर !' केवलिश्रेष्ठ ! हे श्रेयांस ! अहम् 'उल्लसद्भवदऽवनतः' करुणातिशयभ्राजमानत्वत्रणितः गता भववनभ्रान्तिश्रान्तिः संसारकान्तारभ्रमणश्रमो यस्यैतादृशः सन् 'अपातम्' अप्रतिपाति 'कं' सुखं 'भजन्' आश्रयन् 'हन्त' इति कोमलामन्त्रणे 'फलेग्रहिः' फलवान् स्याम् । किम्भूतोऽहम् ? 'नतः' कृतप्रणामः ॥ [ १ ]

जिनसमुदयं विश्वाधारं हरन्तमिहाङ्गिनां,
भवमऽदरदं रुच्या कान्तं महामितमोहरम् ।
विनयमधिकं कारं कारं कुला[2]दिविशिष्टता-
भवमदरदं रुच्याऽक्रान्तं महामि तमोहरम् ॥ २ ॥

जिनसमुदयमिति ॥ अहम् 'अधिकम्' अतिशयितम् अधिकं कं सुखं यस्मादिति वा 'विनयं' कायेन मनसा चावनतिलक्षणं 'कारं कारं' कृत्वा कृत्वा 'जिनसमुदयं' तीर्थकरसमूहं 'रुच्या' श्रद्धया 'महामि' भावस्तवेन पूजयामि । किम्भूतम् ? विश्वस्य–जगत आधारं–दुर्गतिपतनप्रतिपन्थिधर्मोपदेशकत्वात् त्राणभूतम् । किं कुर्वन्तम् ? 'इह' जगति 'अङ्गिनां' प्राणिनां 'भवं' संसारं 'हरन्तम्' अपनयन्तम् । पुनः किम्० ? 'अदरदम्' अभयदम् । पुनः किम्० ? 'कान्तं' मनोहरम्, कया ? 'रुच्या' कान्त्या । भवं किम्भूतम् ? महैः–पाणिग्रहाद्युत्सवैः अमितः–अपरिमितो यो मोहः मोहनीयं कर्म संसारभ्रमणहेतुभूतमज्ञानं वा तं राति–ददाति यस्तम्, महैः–उत्सवैः अमिता–अपरिमिता मा–लक्ष्मीर्येभ्यस्तादृशा ये ऊहाः–वितर्काः तान् राति–ददातीति जिनसमुदयस्यैव वा विशेषणं व्याख्येयमेतत् । पुनः किम्० ? कुलस्य

[1] °मनं की० ॥ [2] °धनुकूलता° हं० पु०, य० पु० ॥

आदी कुलादी—जातिलाभे, कुलम् आदिर्येषां तानि तद्गुणसंविज्ञानबहुव्रीहिणा कुलैश्वर्यबलरूपतपःश्रुतानि, ततः कुलादी च कुलादीनि चेत्येकशेषात् कुलादीनां—जात्यादीनां या[1] विशिष्टता—उत्कर्षः तद्भवः—तदुत्पन्नो यो मदः—अहङ्कारस्तं रदति—अपनयति यस्तम् । पुनः किम्० ? अकस्य—दुःखस्य अन्तो यस्मात् तम् । पुनः किम्० ? 'तमोहरं' पापापनयनकरम् ॥ [ २ ]

**शुचिगमपदो भङ्गैः पूर्णो हरन् कुमतापहो-**
**ऽनवरतमऽलोभावस्थामाऽऽश्रयन्नऽयशोऽभितः ।**
**जन ! तव मनो यायाच्छायामयः समयो गल-**
**न्नवरतमलो भावस्थामाश्रयं नयशोभितः ॥ ३ ॥**

शुचीति ॥ हे 'आश्रयन्'! भजन् ! काम् ? 'अलोभावस्थां' सन्तोषदशाम्, **एतेनाधिकारित्वं सूचितम्, अधृतिमतोऽनधिकारित्वात् ।** हे जन ! 'समयः' सिद्धान्तः तव मनो 'अनवरतं' निरन्तरं 'यायात्' गच्छतु । मनः किम्भूतम् ? 'भावस्थामाश्रयं' श्रद्धाबलमन्दिरम् । समयः किम्भूतः ? शुचीनि—पवित्राणि गमपदानि—सदृशपाठपदानि यत्र सः । पुनः किम्० ? 'भङ्गैः' विकल्पविशेषैः 'पूर्णः' भृतः । किं कुर्वन् ? 'अभितः' समन्ताद् 'अयशः' अकीर्तिं 'हरन्' अपनयन् । पुनः किम्० ? कुमतं—बौद्धादिराद्धान्तं अपहन्ति यः सः । पुनः किम्० ? 'छायामयः' प्रकृष्टशोभः । पुनः किम्० ? 'गलन्' क्षीयमाणो नवरतमेव—अभिनवनिधुवनमेव भावमालिन्यहेतुत्वान्मलो यस्मात् सः, अस्ति हि समयाभ्यासस्य पुंवेदोदयनिरोधहेतुत्वेन तथात्वम् । पुनः किम्० ? नयैः—नैगमादिभिः 'शोभितः' भ्राजितः ॥ [ ३ ]

**सुकृतपटुतां विघ्नोच्छित्त्या तवारिहतिक्षमा-**
**ऽपविफलकरा द्युत्याऽगेहाऽऽघनाघनराजिता ।**
**वितरतु महाकाली घण्टाक्षसन्ततिविस्फुर-**
**त्पविफलकरा द्युत्यागेहा घनाघनराजिता ॥ ४ ॥**

इति श्रीश्रेयांसजिनस्तुतिः ॥ ११ ॥

सुकृतेति ॥ हे 'अगेह'! गेहरहित ! **महाकाली** 'विघ्नोच्छित्त्या' अपायापनयनेन तव 'सुकृतपटुतां' पुण्यप्रभुत्वं 'वितरतु' ददातु । किम्भूता ? अरीणां—वैरिणां हतिः नाशः तत्र क्षमा—समर्था, एतेन परार्थसम्पन्निर्वाहिका स्वार्थसम्पदुक्ता । पुनः किं० ? अप—गतं विफलं मोघं कर्म यस्याः तादृशी सती कं सुखं रातीति अपविफलकरा, अप—गतो विफलः—मोघः करः—दण्डो यस्याः सेति वा । पुनः किम् ? 'द्युत्या' कान्त्या 'आ' समन्तात् 'घनाघनराजिता' मेघवत् शोभिता । पुनः किम्० ? घण्टा च अक्षसन्ततिश्च विस्फुरती—शोभमाने पविफले च घण्टाक्षसन्ततिविस्फुरत्पविफलानि, तानि करे—हस्ते यस्याः सा । पुनः किम्० ? द्योः—स्वर्लोकस्य त्यागेहा—प्रहाणेच्छा यस्याः, परमधर्माङ्गभूतनरभवप्राप्तिस्पृहयालुत्वादिति भावः । पुनः किम्० ? घनाघा—निबिडपापा ये नराः मनुजास्तैरजिता तेषामप्रत्यक्षेति ॥ [ ४ ]

इति श्रीश्रेयांसजिनस्तुतिविवरणम् ॥ ११ ॥

१ अनुकूलता की० ॥

# १२–श्रीवासुपूज्यजिनस्तुतिः

[ स्रग्धरा ]

पद्मोल्लासे पटुत्वं दधदधिकरुचिर्वासुपूज्याऽर्कतुल्यो
लोकं सद्धीरपाताशमरुचिरपवित्राससहारिप्रभाऽव ।
लुम्पन् स्वैर्गोविलासैर्जगति घनतमो दुर्नयध्वस्ततत्त्वा-
लोकं सद्धीर ! पाता शमरुचिरपवित्रास ! हारिप्रभाव ! ॥ १ ॥

पद्मोल्लास इति ॥ हे 'अरुचिरपवित्राससहारिप्रभ !' रुचिराश्च पवित्राश्च रुचिरपवित्राः–स्वमतपवित्रान्तःकरणाः श्रमणाः तान् न सहन्त इति तदसहाः ते च ते अरयः–बौद्धादयस्तेषां प्रभा–कान्तिः सा नास्ति यस्मात् तस्यामन्त्रणम्, प्रकृष्टा भा यस्याऽसौ प्रभः, न सन्ति रुचिरपवित्रासहा अरयो यस्य सः अरुचिरपवित्रासहारिः, अरुचिरपवित्रासहारिश्चासौ प्रभश्चेति कर्मधारयगर्भं वा इदमामन्त्रणम्, हे 'सद्धीर !' सतां मध्ये धीरः सँश्चासौ धीरश्चेति वा तस्यामन्त्रणम्, हे 'अपवित्रास !' अप–गतो वित्रासः–भयं यस्मात् तस्यामन्त्रणम्, हे 'हारिप्रभाव !' मनोहरानुभाव ! हे वासुपूज्य ! त्वं 'लोकं' भव्यप्राणिनम् 'अव' रक्ष । त्वं किम्० ? 'अर्कतुल्यः' सूर्यसदृशः । किं कुर्वन् ? 'पद्मोल्लासे' लक्ष्मीविलासे 'पटुत्वं' निपुणत्वं दधत्, अर्कोऽपि च 'पद्मोल्लासे' कमलविकासे पटुत्वं बिभर्ति । पुनः किम्भूतः ? अधिका–जगदतिशायिनी रुचिः–कान्तिर्यस्य अधिका–अधिकसुखा रुचिः–सम्यग्दृष्टिर्वा यस्य स तथा, अर्कोऽपि च सकलग्रहमण्डलेऽधिकरुचिर्भवति । पुनः किम्० ? सती–शोभना धीर्यस्य स तथा । लोकं किम्भूतम् ? नास्ति पाताशा संसारपतनेच्छा यस्य स तथा तम्, भवभीरुमित्यर्थः । पुनस्त्वं किं कुर्वन् ? 'स्वैः' आत्मीयैः 'गोविलासैः' वाणीविलासैः 'जगति' भुवने 'घनतमः' सान्द्रमज्ञानं 'लुम्पन्' अपनयन्, अर्कोऽपि च गोविलासैः–किरणविलासैः घनतमः–सान्द्रशार्वरान्धकारं लुम्पति । लोकं किम्भूतम् ? दुर्नयध्वस्तः–बौद्धादिभिर्नाशितः तत्त्वालोकः–परमार्थप्रकाशो यस्य स तथा तम्, अर्कोऽपि हि ध्वस्तालोकं लोकं नयनमुद्राजननीं निमीलामपहृत्य त्रायत इति श्लेषः । त्वं किं० ? 'पाता' रक्षिता, एतेन रक्षितारं प्रति रक्षाप्रार्थनं नाविचारितरमणीयमिति सूचितम् । पुनः किम्० ? शमे रुचिर्यस्य स तथा ॥ [ १ ]

लोकानां पूरयन्ती सपदि भगवतां जन्मसंज्ञे गतिर्मे,
हृद्या राजी वनेऽत्राऽभवतुदऽमरसार्थानताऽपातमोहा ।
साक्षात् किं कल्पवल्लिर्विबुधपरिगता क्रोधमानार्तिमाया-
हृद्या राजीवनेत्रा भवतु दमरसाऽर्थानतापा तमोहा ॥ २ ॥

लोकानामिति ॥ सा 'भगवतां' तीर्थकृतां 'राजी' श्रेणिः 'अत्र' प्रत्यक्षे 'जन्मसंज्ञे' जनुराह्वये वने 'मे' मम 'गतिः' आधारो भवतु । किम्भूता ? 'हृद्या' मनोज्ञा । पुनः किम्० ? तोदनं तुत्–पीडा,

भवस्य—संसारस्य तुद् भवतुत्, नास्ति भवतुद् यस्याः साऽभवतुत् । पुनः किम्० ? अमरसार्थेन—सुरसमूहेन आनता—प्रणता । पुनः किम्० ? नास्ति पातः संसारगर्त्तपतनं मोहः—अज्ञानं च यस्याः सा । किं कुर्वती ? 'लोकानां' जनानां 'सपदि' तत्कालम् 'अर्थान्' मनोवाञ्छितपदार्थान् 'पूरयन्ती' इष्टसिद्ध्या निवृत्तेच्छान् कुर्वती । 'किम्' इति उत्प्रेक्षे 'साक्षात्' प्रत्यक्षा 'कल्पवल्लिः' सुरतरुव्रततिः । किम्भूता ? विबुधैः—देवैः परिगता—आश्रिता । सा का ? या क्रोधः—परितापलक्षणो मानश्च स्वगुणाभिष्वङ्गलक्षणो अर्त्तिश्च—शोकादिलक्षणा माया च—परवञ्चनलक्षणा क्रोधमानार्त्तिमायाः, ता हरति या सा । पुनः किम्० ? राजीववत्—कमलवत् नेत्रे—लोचने यस्याः सा तथा । पुनः किम्० ? दमे—इन्द्रियविजयलक्षणे रसः—दृढचित्तादरो यस्याः सा तथा । पुनः किम्० ? 'अतापा' तापरहिता । पुनः किम्० ? 'तमोहा'[1] तमः—पापं जहाति—त्यजति या सा ॥ [ २ ]

उत्तुङ्गस्त्वय्यभङ्गः प्रथयति सुकृतं चारुपीयूषपीना-
ऽऽस्वादे शस्तादराऽतिक्षतशुचिसदनेकान्त ! सिद्धान्तरागः ।
रङ्गद्भङ्गप्रसङ्गोल्लसदसमनये निर्मितानङ्गभङ्ग-
स्वादेश ! स्वादरातिक्षतशुचिसदने कान्तसिद्धान्त ! रागः ॥ ३ ॥

उत्तुङ्ग इति ॥ हे 'शस्तादर !' शस्तः—प्रशस्त आदरो यस्य शस्ते—कल्याणे वा आदरो यस्य, कल्याणकरणबद्धाभिनिवेशत्वात्, तस्याऽऽमन्त्रणम्, हे 'शस्त !' प्रशस्त ! हे 'अदर !' नास्ति दरः भयं यस्येत्यामन्त्रणद्वयं वा । हे 'सदनेकान्त !' सन्—शोभनः परतर्काप्रतिहतत्वाद् अनेकान्तः—स्वविषयः स्याद्वादो यस्य तस्यामन्त्रणम्, हे 'निर्मितानङ्गभङ्गस्वादेश !' निर्मितः—विहितोऽनङ्गभङ्गः—कन्दर्पप्रतिघातो यैरेतादृशाः सुष्ठु—शोभना आदेशाः—अवद्धश्रुतोपदेशा विषयो वा यस्य स तस्यामन्त्रणम्, हे 'कान्तसिद्धान्त !' मनोहरागम ! त्वयि मम 'अभङ्गः' अक्षयः 'रागः' प्रेम 'उत्तुङ्गः' प्रतिक्षणं प्रवर्द्धमानः 'स्यात्' भवतु । त्वयि किम्भूते ? चारु—पेशलं यत् पीयूषम्—अमृतं तद्वत् पीनः मेदुर आस्वादः—चर्वणाजनितरसो यस्य स तथा तस्मिन् । पुनः किं० ? अतिशयेन क्षता—नाशिता शुक्—शोको येन स तथा तस्मिन् । पुनः किं० ? रङ्गताम्—अन्योन्यमनुप्रविशतां भङ्गानां विकल्पविशेषाणां यः प्रसङ्गः—एकार्थप्रत्यासत्तिस्तेन उल्लसन्तः—यथास्थानमापतन्तो असमाः—निरुपमाः तत्रान्तरातीतत्वाद् नयाः—नैगमादयो यस्य स तथा तस्मिन् । पुनः किम्० ? अरातीनां—वैरिणां क्षतं यस्मादेतादृशं यत् शुचि—भाग्यं तस्य सदने—गृहे । किं कुर्वति ? 'प्रथयति' विस्तारयति । किम् ? 'सुकृतं' पुण्यम् । किम्भूतम् ? सिद्धान्तरं—जातविच्छेदं[2] आगः मन्तुर्यस्मात् तत् तथा । 'सिद्धान्तरागः' इति रागस्य वा विशेषणं तदाऽऽगशब्दस्य द्रव्यास्तिकनयाभिप्रायेण पर्वतादिवृत्तित्वादान्तरपदोपादानेनैवम्भूतनयाभिप्रायाभिव्यक्तेः सिद्ध आन्तरागः–शुद्धात्मतत्त्वप्रकाशो यस्मादित्यर्थः॥ [३]

वाग्देवि ! प्रीणयन्ती पटुविविधनयोन्नीतशास्त्रार्थनिष्ठा-
शङ्कान्ते ! देहि नव्येरितरणकुशले ! सुस्रुवा देवि ! शिष्टम् ।

1 'तमोहा' पापत्यागकारिणी ॥ २ ॥ सा० ॥ 2 °विरहम् आग की० ॥

**श्रद्धाभाजां प्रसादं सुमतिकुमुदिनीचन्द्रकान्ति(न्ते)! प्रपूर्णा-**
**ऽऽशं कान्ते! देहिनव्येऽरितरणकुशले! सुभ्रु! वादे विशिष्टम् ॥४॥**

इति श्रीवासुपूज्यजिनस्तुतिः ॥ १२ ॥

वाग्देवि! इति ॥ हे 'पटु० कान्ते!' पटवः—दुर्नयनिरासससमर्था विविधाः—विचित्रार्थविषया ये नयाः नैगमादयस्तैः उन्नीता—प्रकटिता या शास्त्रार्थनिष्ठा—तत्रविषयमर्यादा तया शङ्कायाः सन्देहस्य अन्तः—परिक्षयो यस्याः सकाशात् सा तथा तस्या आमन्त्रणम्, हे 'नव्ये० शले!' नव्यः नवीन ईरितः—प्रेरितो यो रणः—सङ्ग्रामस्तत्र कुशलं—कल्याणं यस्याः तस्या आमन्त्रणम्, हे 'सुम० कान्ते!' सुमतिरेव—उत्तमधीरेव कुमुदिनी—कैरविणी तत्र चन्द्रकान्तिरिव सोममरीचिरिव या सा तथा तस्या आमन्त्रणम्, हे 'कान्ते!' मनोज्ञे!, हे 'देहिनव्ये!' देहिभिः—प्राणिभिः नव्या स्तवनीया तस्या आमन्त्रणम्, हे 'अरि० शले!' अरीणां—वैरिणां तरणम्—पारगमनम् तद्विजय इत्यर्थः तत्र कुशले!—दक्षे!, हे 'सुभ्रु!' सुष्ठु—शोभना भ्रूर्यस्यास्तस्या आमन्त्रणम्, हे 'देवि!' पूज्ये! हे 'वाग्देवि!' **सरस्वतीदेवि!**, अथवा 'विप्रीणयन्ती' विशेषेण प्रीणयन्तीति पृथक्करणाद्। हे 'वाग्दे!' वचनप्रदे! देवि! त्वं 'सुभ्रुवा' उत्तमभ्रुवा कृत्वा 'श्रद्धा-भाजाम्' जिनमतभक्तिशालिनां पुरुषाणां 'वादे' वादविषये 'विशिष्टं' अतिशयितं 'प्रसादं' कुशलानुबन्धि-वरं 'देहि' प्रयच्छ। प्रसादं किम्०? प्रपूर्णा आशा यस्मात्तम्। त्वं किं कुर्वती? 'शिष्ट' सदाचारं 'प्रीणयन्ती' सन्तोषयन्ती ॥ [ ४ ]

इति श्रीवासुपूज्य [ जिन ] स्तुतिविवरण समाप्तमिति ॥ १२ ॥



## १३—श्रीविमलजिनस्तुतिः

[ पृथ्वी ]

**नमो हतरणायतेऽसमदमाय पुण्याशया,**
**सभाजित! विभासुरैर्विमल! विश्वमारक्षते।**
**न मोहतरणाय ते समदमाय! पुण्याशया-**
**सभाजितविभासुरैर्विमलविश्वमारक्षते! ॥ १ ॥**

नम इति ॥ हे 'हतरणायते! हतरणा—हतसङ्ग्रामा प्रशमपवित्रत्वाद् आयतिः—उत्तरकालो यस्य, हता वा रणायतिर्येन तस्यामन्त्रणम्। हे 'सभाजित!' सेवित!, कैः? 'असुरैः' भवनपतिविशेषैः, किम्भूतैः? 'विभासुरैः' देदीप्यमानैः, कया? 'पुण्याशया' धर्म लिप्सया। हे 'न समदमाय!' न साहङ्कारकपट!' हे 'पुण्याशयासभाजितविभ!' सभया—पर्षदा अर्थात् परेषां जिता विभा—कान्तिर्यस्य स सभाजितविभः, न सभाजितविभोऽसभाजितविभः, पुण्यः—पवित्रः आशयः—अध्यवसायो यस्य सः पुण्याशयः, पुण्याशयश्चासौ असभाजितविभश्च पुण्याशयासभाजितविभः तस्यामन्त्रणम्। हे 'विमलविश्वमारक्षते!' मारस्य क्षतिः मार-क्षतिः—कन्दर्पजनिता गुणपरिहाणिरित्यर्थः, विश्वा सर्वा चासौ मारक्षतिश्च विश्वमारक्षतिः, मलः—वक्ष्यमाणं कर्म ऐर्यापथं वा, मलश्च विश्वमारक्षतिश्च मलविश्वमारक्षती, विगते मलविश्वमारक्षती यस्य स तथा

तस्यामन्त्रणम्, अथवा विमला निर्मला विश्वा—पृथिवी यस्माद् असौ विमलविश्वः, मारस्य—कन्दर्पस्य क्षतिः—क्षयो यस्मादसौ मारक्षतिः, विमलविश्वश्चासौ मारक्षतिश्चेति कर्मधारयगर्भमामन्त्रणं व्याख्येयम्, स्वतन्त्रं वेदमामन्त्रणद्वयम्—'हे विमल !' मलरहित !, हे 'विश्वमारक्षते !' विश्वस्य—सर्वस्य मारस्य—मरणहेतोः क्षतिः—क्षयो यस्मात् तस्यामन्त्रणम् इति व्याख्येयम् । हे **विमल!** 'ते' तुभ्यं नमः, अस्तु इति शेषः । ते किम्भूताय ? 'असमदमाय' असमः—निरुपमो दमः—इन्द्रियजयो यस्य स तथा तस्मै । पुनः किम्भूताय ? 'मोहतरणाय' मोहस्य—अष्टाविंशति—प्रकृत्यात्मककर्मणः सकलकर्ममूल[1]भूतस्य तरणं यस्य यस्माद् वा स तथा तस्मै । किं कुर्वते ? आ—समन्ताद् रक्षते—पालयते, किम् ? 'विश्वं' जगत् ॥ [ १ ]

**महाय तरसा हिताऽजगतिबोधिदानामहो !,**
**दया भवतुदां तताऽसकलहाऽसमानाऽऽभया ।**
**महायतरसाहिता जगति बोऽधिदाना महो-**
**दया भवतु दान्तताऽसकलहासमानाऽभया ॥ २ ॥**

**महायेति** ॥ अजेषु—सिद्धेषु मध्ये गतिः—गमनं येषां तेऽजगतयः, ते च ते बोधिदाः—तीर्थकृतोऽजगतिबोधिदाः तेषाम्, 'अहो !' इत्याश्चर्ये, 'दया' अनुपकृतोपचिकीर्षारूपा 'वः' युष्माकं 'महाय' उत्सवाय भवतु, [2]केन ? 'तरसा' वेगेन । किम्भूता दया ? 'हिता' हितकारिणी । अजगतिबोधिदानां किम्भूतानाम् ? 'भवतुदां' भवं संसारं तुदन्ति—क्षपयन्तीति भवतुदस्तेषाम् । [ पुनः ] दया किम्० ? 'तता' विस्तीर्णा । पुनः किम्० ? 'असकलहा' सह कलहेन वर्तते या सा सकलहा, न सकलहा असकलहा । पुनः किम्० ? 'असमाना' निरुपमा, कया ? 'आभया' शोभया कृत्वा । पुनः किम्० ? 'महायतरसाहिता' महान् गुरुः आयतः—विस्तीर्णो यो रसः—शान्ताख्यस्तेन आहिता—स्थापिता, क्व ? 'जगति' विश्वे । पुनः किम्० ? 'अधिदाना' अधि—अधिकं दानं यस्याः सा तथा । पुनः किम्० ? 'महोदया' महान् उदयो यस्याः सा तथा । पुनः किम्० ? 'दान्तताऽसकलहासमाना' न स्तः सकलौ सम्पूर्णौ हासमानौ—स्मितस्मयौ यस्याः साऽसकलहासमाना, दान्ततया स्वसमानाधिकरणेन दमेन हेतुभूतेन असकलहासमाना दान्तताऽसकलहासमाना । पुनः किम्० ? 'अभया' नास्ति भयं यस्याः सकाशात् सा ॥ [ २ ]

**क्रियादऽरमऽनन्तरागततया चितं वैभवं,**
**मतं समुदितं सदा शमवताऽभवेनोदितम् ।**
**क्रियादरमऽनन्तरागततयाचितं वैभवं,**
**मतं समुदितं सदाशमऽवता भवेऽनोदितम् ॥ ३ ॥**

**क्रियादिति** ॥ 'वैभवं' विभुसम्बन्धि आर्हतमित्यर्थः 'मतं' शासनं 'मतम्' अभीष्टं 'वैभव' विभवसमूहं प्रभुत्वं वा 'अरम्' अत्यर्थं क्रियात् । किम्भूतम् ? 'सदा' नित्यम् 'अनन्तराऽऽगततया' अविच्छिन्नशिष्यप्रशिष्यादिपरम्पराप्राप्ततया 'चितं' पुष्टम्, सुसम्प्रदा[3]योपनिबद्धार्थमित्यर्थः । पुनः किम्० ? 'समुदितं' सह मुदा हर्षेण वर्तत इति समुत् तेन इतं—प्राप्तम् । पुनः किम्० ? 'उदितम्' उक्तम्, केन ? 'शमवता'

१ °लकर्मसेनानीभूतस्य तरणं—निर्जराहेतुभिरौपक्रमिकवेदनं यस्य की० ॥ २ कयम् ? की० ॥ ३ दायेन नि° सा० ॥

अज्ञातकर्तृक–

# ऐन्द्रस्तुतीनामवचूरिः ।

१

## श्रीऋषभजिनस्तुतिः

**श्लोकः १**

ऐन्द्र०—'शमवतां राज्या' प्रशमिनां श्रेण्या । 'गीतमहोदयः' गीतो महानुदयो—ज्ञानमतिशयो वा यस्य, गीते महोदये—कान्तिकरुणे वा यस्य सः । सन्—उत्तमो योगी सयोगी । इतः—प्राप्तो महोदयो मोक्षो येन स इतमहोदयः । राज्यस्याधिकारः—कार्यपरत्वं तेनाजितः स्ववशतामानीतः, राज्ये अधिकाराः—मानसव्यथाकारिणः शत्रवस्तैरजित इति वा, राज्याधिरेव कारा दुःखहेतुत्वात् तयाऽजित इति वा 'अधिकाः' प्रत्यहं प्रवर्द्धमानत्वाद् अधि कं सुखं यास्य इति वा ॥ १ ॥

**श्लोकः २**

उद्भूत०—'तीर्थे' सङ्घे । शास्तः—शिवसुखहेतुतया श्लाघितो रसः—शान्ताख्यो येषां ते । महसा—तेजसा दितं—खण्डितं भयं यैः, ते च ते अकान्ताश्च, अकस्य—दुःखस्य अन्तो येभ्यस्ते इति समासः । सताम्—उत्तमानां आशायाः—इच्छायाः पदं स्थानं पुष्णन्तु—इष्टदानेन फलवत् कुर्वन्तु । महती उदिता भा—कान्तिस्तया 'कान्ताः' मनोहराः । शापम्—उपालम्भं द्यतीति शापदम् ॥ २ ॥

**श्लोकः ३**

जैनेन्द्रं० अमङ्गानि—अश्रद्धारहितानि मानसानि येषां तेषां हितम् । मानानि—प्रमाणानि ॥ ३ ॥

**श्लोकः ४**

या जाड्यं०—पुण्यौ पवित्रौ प्रभाविक्रमौ—कान्तिपराक्रमौ ययोर्याभ्यां वा, प्रकृष्टौ भाविक्रमौ ययोस्तौ प्रभाविक्रमौ, ततः पुण्यौ च तौ प्रभाविक्रमौ चेति वा समासः ॥ ४ ॥

२

## श्रीअजितजिनस्तुतिः

**श्लोकः १**

मुनितति०—शमेन जितौ मारमदौ कन्दर्पाहङ्कारौ येन तम् । भेन—ज्योतिष्कदेवभेदेन नक्षत्राख्येन 'वन्दिता'—स्तुता । 'आपत्' साक्षाच्चक्रे । हे 'अदम्भवन्!' अमायाविन्! । शं, कीदृशम्? 'दितापत्'—दिता—खण्डिता आपद् येन ॥ १ ॥

**श्लोकः २**

नियत०—'परमतमोहर!' उत्कृष्टाज्ञानहर! 'भया' कान्त्या हे रुचिर! 'अनिदानं' निदानरहितं । दानं ददत् ॥ २ ॥

७

**श्लोकः ३**

नयगहन०—उद्यतं—उद्यमशालि मानसं—चित्तं येषां ते। धुतं—कम्पितम् आरम्—वैरिसमूहो येन तत्। 'निरस्ताजि' शान्तदेशनाबलादपास्तसङ्ग्रामम्। 'मुदा' हर्षेण 'यतमानाः' संयमयोगे उद्यच्छन्तो ये साधवः—यतयस्तान् तारयतीति ॥ ३ ॥

**श्लोकः ४**

पविमपि० महैः—उत्सवैः अधिका, 'अरम्' अत्यर्थम्। 'पविं' वज्रं 'महाधिकारं' च 'अपि' समुच्चये, 'दधती'—बिभ्रती। महाधिं कारयतीति 'महाधिकारं' इति। अहितमदविशेषणतया व्याख्याने 'पविमपिदधती' शत्रुहननाद् वज्रमनाच्छादयन्तीति व्याख्येयम् ॥ ४ ॥

## ३

## श्रीसम्भवजिनस्तुतिः

**श्लोकः १**

सम्भव०—त्वं किं कुर्वन्? 'भाविनि' शुभध्यानवति पुरुषे सुखं ददत्। हे 'भावा!' भावारं—मिथ्यात्वाद्यङ्गं तस्य वारः—समूहस्तद्वारण!। 'विश्वं, विश्वं' सर्वं जगत्। हे 'अभाविनिभ!' क्षीणमोहतयाऽभविष्यत्कपट!। 'अव' रक्ष। हे 'अरवारव!' अरवाणामारवो यस्मात् "मूको जल्पति" इत्यादिस्तुतेः। हे 'अरण!' असङ्ग्राम! ॥ १ ॥

**श्लोकः २**

यद्धर्म०—'सन्ततम्' निरन्तरम्। 'उदितोदितः' पूर्वं पश्चाच्चाप्राप्तनिधनः। 'अदित' ददौ। उदारो—वार्षिकदानदातृत्वात् दानशौण्डः करो यस्य। कं—सुखं रातीति करः, उदारश्चासौ कर इति वा। शुचिः—निर्मला सन्तता—अच्छिन्नधारा मुदिता—परसुखतुष्टिर्यस्यासौ। न स्तः दाराः—स्त्रियः करो—दण्डश्च यस्यासावदारकरः ॥ २ ॥

**श्लोकः ३**

जैनी०—'यया' हेतुभूतया 'सन्तः' उत्तमाः किं 'शमितां' उपशान्ततां 'न इता' न प्राप्ताः?। जैनी, गीः कीदृशी? 'मिता०' मितैः—स्वल्पैः अक्षरैः वर्णैः रुच्या मनोहरा। बह्वर्थाल्पसूत्रस्यैव शास्त्रस्य सारत्वात्। समवतरन्तः—अपृथक्त्वदशायां सूत्रे समापतन्तो नया यस्यां सा समव०, तया। शमिता—उपशमं नीता अमिताऽऽमिता—बहुरोगिता यस्मिन् एतादृशं यद् अक्षरं मोक्षस्तस्य रुच्या—तदभिलाषेण ॥ ३ ॥

**श्लोकः ४**

दलयतु०—जनतया—जनसमूहेन महिता—पूजिता। 'हिता' अनुकूला। 'हि' निश्चितम्। तारः—उज्ज्वलः आगमः—सिद्धान्तस्तं ददातीति तारा०। 'तारा' उज्ज्वलाऽऽगमदेति च पदद्वयं वा। अहितेषु—वैरिषु आहितौ अहितारागमदौ—अप्रियस्नेहाहङ्कारभावौ यया सा ॥ ४ ॥

४

# श्रीअभिनन्दनजिनस्तुतिः

श्लोकः १

त्वमभि०—निराकृतं—निरस्तं समाजनानां—पर्षल्लोकानां साध्वसं इह लोकादिभयं येन । 'हारिभिः' मनोज्ञैः । कृतं समाजनं—प्रीतिर्येन । साधून् न सहन्ते इति साध्वसहाः, ते च तेऽरयश्च तैः ॥ १ ॥

श्लोकः २

भगवतां०—'आशु' शीघ्रम् । 'भवतां' वः । 'तनुतां' कुरुताम् । 'परं' शत्रुं । 'उत्करः' समूहः । 'शुभवतां' कल्याणवताम् । 'तनुतां' कृशताम् । पराः—प्रकृष्टा मुदो—हर्षान् करोतीति परमुत्करः ॥ २ ॥

श्लोकः ३

त्रिदिव०—स्फुरन् सुरसमूहो—देवगणो यत्र तत् । 'अयम्' असौ । 'अर्हतां' पूजयताम् । 'मतम्' इष्टं पदं ददत् । सुष्ठु—शोभनो रसः—शान्ताख्यो यत्र तत् । 'ऊहमयं' तर्कमयम् । 'अर्हतां' जिनानाम् । 'मतम्' सिद्धान्तम् ॥ ३ ॥

श्लोकः ४

धृतसकाण्ड०—'तेजसा'—प्रतापेन 'न रहिता' न वियुक्ता । सत्—शोभनम् अयम् भाग्यं यस्याः सा । रुच्या—कान्त्या राजिता—शोभिता । 'परैः' शत्रुभिः अजिता । नरेभ्यो हिता नरहिता । सह दयया वर्तत इति सदया । 'रुचिरा' मनोहरा ॥ ४ ॥

५

# श्रीसुमतिजिनस्तुतिः

श्लोकः १

नम०—'नम' प्रणम । नमदमरो—नमत्सुरः सदमरसो—दमरसेन सहितश्चासौ सुमतिः—शोभनमतिश्च तम् । सत्सु मध्येऽसदरो—निर्भयः, संश्चासावसदरश्चेति वा तम् । हे उदार ! । मुदा—हर्षेण जनितः कृतः अजनितापदस्य—अभवतापदायकस्य पदस्य विभवो येन तम् । 'विभवं' संसाररहितम् । हे नर ! । नरकस्यान्तो यस्मात् तम् । 'कान्तं' मनोज्ञम् ॥ १ ॥

श्लोकः २

भवभव०—भवभवं संसारोद्भवं भयं द्यतीति भवभवभयदा । 'अभयदावली' जिनश्रेणिः । बलीयान् दयोदयः—करुणोदयो यस्याः सा । 'अमायामा' माया (अमा—) रोगाश्च [ न सन्ति यस्याः सा ] । दद्यात् । अद्य । 'अमितं' अमानम् । 'इतशमा' प्राप्तशमा । 'शं' सुखम् । आदिष्टम्—आज्ञप्तं दिष्टबीजं—धर्माधर्महेतुर्यया । 'अबीजा' निर्जन्मा ॥ २ ॥

**श्लोकः ३**

दमदम०—'दमदम्' इन्द्रियजयप्रदम् । 'असुगमं' दुर्गमम् । सुष्ठवो (सुष्ठु) गमाः यत्र तत् सुगमम् । 'सुगमम्' । 'सदा' नित्यम् । सताम्—उत्तमानां आनन्दनम् । हे 'दयाविद्याविद्!' करुणाशास्त्रज्ञ ! । 'परं' उत्कृष्टम् । 'अपरं' निःशत्रुकम् । हे 'अस्मर !' निर्मदन ! । स्मर । त्वं किं० ? 'महामहः' उत्कृष्टं महः—तेजो यस्यासौ । धीरा—अनाकुला धीः—मतिर्यस्यासौ । 'रसमयं' प्रकृष्टरसम् 'समयं' सिद्धान्तम् ॥ ३ ॥

**श्लोकः ४**

काली० कालीनाम्नी देवी असरसमावस्य—दौर्जन्यस्य अभावाय—अपनयनाय 'कालीः' सुखालीः 'तनुतात्' कुरुतात् । नयनयोः लोचनयोः सुखदा—शर्मदायिनी । असुखं—दुःखं द्यति खण्डयतीति असुखदा । महिभिः—उत्सविभिः महिता—पूजिता चासौ नुता—स्तुता च, महिभिर्ये महितास्तैर्नुतेति वा, महिमहिताभ्यां नुता स्तुतेति वा । इतः—प्राप्तः अदितः—अखण्डितः अमानः अप्रमाणः मानः—अहङ्कारः पूजा वा तत्र या रुचिः—अभिलाषस्तया । रुच्या मनोज्ञा । अथवा इता—प्राप्ता अदिता—अखण्डिता अमाना मा लक्ष्मीर्यया, 'रुच्या' भासा 'न अरुच्या' नाममनोज्ञा इत्याद्यूह्यम् ॥ ४ ॥

६

## श्रीपद्मप्रभजिनस्तुतिः

**श्लोकः १**

पद्मप्रभेश०  सन् विश्वासो येषु ईदृशानि मानसानि येषां तेषु दयापरः—करुणातत्परः । 'भावितस्य' ध्यानैकाग्रस्य । विश्वे—जगति असमान ! (ः ?)—असदृश ! (ः ?) हे 'सदय !' सकरुण ! सद्भाग्येति वा । हे 'अपरः' नास्ति परः—शत्रुर्यस्य, नास्ति परः—उत्कृष्टो यस्मादिति वा । 'भावि' भविता ॥ १ ॥

**श्लोकः २**

मूर्तिः शमस्य०—पुण्यानि दधती 'काचन' अनिर्वचनीया 'सभासु' पर्षत्सु 'रराज' बभ्राजे । 'नव्या' नवीना । 'पुण्या' पवित्रा । हे 'अनिकाचन !' दृढकर्मबन्धनरहित ! । सह भया वर्तत इति सभा । सुरराजानां—देवेन्द्राणां नव्या स्तुत्या ॥ २ ॥

**श्लोकः ३**

लिप्सुः पदं०—यमैः— महाव्रतैः 'परिगतैः' आश्रितैः । पदं किं० ? तया—लक्ष्म्या सहितं सतम्, अतिशयितं सतं सततमम्, यद्वा ततया विस्तृतया मया—लक्ष्म्या सहित सततमम् । चतुराणाम् उचिता अर्थाः पुरुषार्था यस्यां सा । 'वाचंयमैः' यतिभिः । रोचितः—श्रद्धितः अर्थो व्याख्यानं यस्याः सा । 'सततं' निरन्तरम् । 'अञ्चतु' पूजयतु ॥ ३ ॥

श्लोकः ४

साहाय्यमत्र०—'अपाता' पातरहिता । 'मुदा' हर्षेण । 'रसमयस्य' प्रकृष्टरसस्य । 'उदारसमयस्य' प्रकृष्टसिद्धान्तस्य । हे 'निरन्तराये !' अन्तरायरहिते ! । 'पातां' रक्षताम् । निरन्तरः—अन्तररहित आयो लाभो यस्याः सा तस्याः आमणत्रम् ॥ ४ ॥

७

# श्रीसुपार्श्वजिनस्तुतिः

श्लोकः १

यदिह०—निरस्तः—अपास्तः अकृतक्ष्माऽवनः—अविहितपृथ्वीरक्षणः मदः—अहङ्कारो येन । 'सु स्व !' सुशब्द ! । 'अधाः' धृतवान् । 'हृद्यशोभ !' कान्तश्रीक ! । 'अवतारं' जन्म । 'अवनमदसुर !' प्रणमद्दानव ! । 'बाधाहृत् !' पीडाहर ! । 'यशः' श्लोकः । भावेन तारं—उच्चैस्तरं, भावोज्ज्वलमिति वा ॥१॥

श्लोकः २

जगति०—'अदुः' ददति स्म । इताः—गताः मदः—अहङ्कारः रतं—निधुवनं अपध्यानं—आर्तरौद्रद्वयं कान्ता—वनिता च येभ्यस्ते । 'सदा' नित्यम् । 'आशाः' दिशः । 'दुरितं' पापम् । अदरतापं—भयोपतापरहितं यद् ध्यानं शुक्लाख्यं तेन कान्ताः मनोज्ञाः । सतां आशा येषु ते सदाशाः ॥ २ ॥

श्लोकः ३

मुनितति०—हतमुद्यत् तमः—पापं येन तम् । 'अहितदा' अप्रियखण्डनकर्त्री । 'अत्रासा' भयरहिता । 'आधिं' मानसीं व्यथाम् । 'आनन्दिता' मुदिता । 'अरं' अत्यर्थम् । 'असमहितदात्रा' निरुपमप्रियदायकेन 'साधिमानं' चारुताम् । 'दितारं' खण्डितशत्रुसमूहम् ॥ ३ ॥

श्लोकः ४

अवतु०—'मुदितम्' आनन्दितम् । 'अकलितापाया' अप्राप्तान्तराया । महामानसी देवी । 'उदितम्' उत्थितम् । 'अकलितापा' सङ्ग्रामोपतापरहिता 'महामानसीमां' महाऽहङ्कारपराकाष्ठाम् ॥ ४ ॥

८

# श्रीचन्द्रप्रभजिनस्तुतिः

श्लोकः १

तुभ्यं०—'नन्तव्य !' नमस्य ! । 'अपापं' निष्पापं पुरुषम् । नास्ति दमस्य हतिर्यस्य तस्यामन्त्रणम् । हे 'सन् !' हे उत्तम ! । नमोऽस्तु । हे 'अहासमाय !' हास्यकपटरहित ! । ध्वस्तः कामस्य अनन्तः—अमितः व्यापो—व्यासङ्गो येन । हे 'अपमद !' मदरहित ! । 'महते' ऐश्वर्यशालिने । हे 'सन्नमोह !' गतमोह ! । 'असमाय' निरुपमाय ॥ १ ॥

**શ્લોકઃ ૨**

શ્રેયો૦—'મુક્તામાલા' મૌક્તિકશ્રેણિઃ । અસમદૈઃ—અનહઙ્કારૈઃ મહિતા—પૂજિતા । 'વઃ' યુષ્માકમ્ । 'આમહીના' રોગરહિતા । 'મુક્તા' રહિતા । 'માલા' મનોહરશ્રેણિઃ । અસમદમાનાં—નિરુપમદમાનાં હિતા—પથ્યા । 'બોધિદાનાં' તીર્થઙ્કૃતામ્ । 'અહીના' ઉત્કૃષ્ટા, નાસ્તિ હીનં—ન્યૂનં યસ્યા ઇતિ વા ॥ ૨ ॥

**શ્લોકઃ ૩**

રઙ્ગદ્ભઙ્ગ૦—ચૂલાનાં—ચૂલિકાનાં માલા શ્રેણિઃ તયા પીનઃ—પુષ્ટઃ । શમદમૌ વિદ્યેતે યસ્યાસૌ તેન । અસઙ્ગતાયાઃ મોક્ષસ્યોપાયેન હેતુના હૃદ્યો—મનોહરઃ । 'આલાપી' આલાપકવાન્ । 'નઃ' અસ્માકમ્ । 'શમદમ્' ઉપશમદાયિનમ્ । 'અવતા' રક્ષતા । યઃ 'સઙ્ગતઃ' સઙ્ગતિમાન્ । 'અપાયહૃત્' વિઘ્નહરઃ ॥ ૩ ॥

**શ્લોકઃ ૪**

સા ત્વં૦—પ્રણાયામઃ—પ્રાણયમઃ । 'અશુચિ' શોકરહિતે । 'મતિ' ધિયમ્ । 'અતાપા' તાપરહિતા । આપદોઽન્તો યસ્યાઃ સા । 'અબલાનાં' નિર્બલાનાં । 'પ્રદત્તપ્રાણા' પ્રદત્તબલા । યા । 'મે' મમ । શુચિમતીનાં—નિર્મલબુદ્ધીનાં મતા—અભીષ્ટા । પાપા એવ દન્તાવલાઃ— ઇભાસ્તેષામ્ ॥ ૪ ॥

## ૯

## શ્રીસુવિધિજિનસ્તુતિઃ

**શ્લોકઃ ૧**

યસ્યાઽતનોત્૦—'સુપ્રભા' સુકાન્તિઃ । 'અવતારે' જન્મનિ । 'શુચિમન્દરાગે' નિર્મલમેરૌ । 'પ્રભાવતારે' અનુભાવોજ્જ્વલે । 'અશુચિ' શોકરહિતે । 'મન્દરાગે' નીરાગે ॥ ૧ ॥

**શ્લોકઃ ૨**

અભૂત્૦—'જનિતાપત્' કૃતવિપત્ । 'એભ્યઃ' એતેભ્યઃ । નમોઽસ્તુ । હે અહસાનાં—હાસ્યમોહરહિતાનામ્ 'ઇનાઃ' ! સ્વામિન ! । 'જનિતાપદેભ્યઃ' જન્મતાપખણ્ડકેભ્યઃ । હસેન—હાસ્યેન અજનિતાપદેભ્યઃ—અકૃતવિઘાતિભ્ય ઇતિ વા ॥ ૨ ॥

**શ્લોકઃ ૩**

વાણી૦ મહોદયો મોક્ષઃ । ત્રિલોકીમ્ 'અવદ્ભિઃ' રક્ષદ્ભિઃ । 'અનીતિ' ઈતિરહિતમ્ । 'હારિ' મનોજ્ઞમ્ । 'અહો !' ઇત્યાશ્ચર્યે । 'દયાવદ્ભિઃ' કૃપાલુભિઃ । 'અનીતિહારિ' અન્યાયહૃત્ ॥ ૩ ॥

**શ્લોકઃ ૪**

જ્વાલો૦—'કરઃ' હસ્તઃ । લાભં કિં૦ ? અતુલા આભા—શ્રીર્યસ્માત્ । 'શં' સુખં દદત્ । 'અદમ્ભવત્યાઃ' અકપટવત્યાઃ ॥ ૪ ॥

## १०

# श्रीशीतलजिनस्तुतिः

### श्लोकः १

जयति०—'वसुमति' धनवति। ददतीत्यविवक्षितकर्म, 'मती' मतवान् 'वसु' धनमिति वा। तरणाय किं ? 'इतरणाय' गतसङ्ग्रामाय। भवे महोदधौ इति व्यस्तरूपकम् ॥ १ ॥

### श्लोकः २

वितर०—हे 'तमोहरणे' पापहृत्!। हे 'वलितमोहरणे!' उद्दलिताज्ञानसङ्ग्रामे! ॥ २ ॥

### श्लोकः ३

भगवतो०—'परमापदं' परमां विपदम्। 'उन्नतिम्' उदयम्। 'जनयतः' कुर्वतः। 'दमादरात्' दमेन—इन्द्रियजयेन अदरात्—निर्भयात् ॥ ३ ॥

### श्लोकः ४

स्तवरवै०—'न परं' न केवलम्। 'अच्छविमानविलासिता' स्वच्छविमानविनोदिता। हे 'परमच्छवि!' उत्कृष्टकान्ति!। मानवि!। न न लासिता, द्वयोर्नञोः प्रकृतार्थगमकत्वाद् उल्लासिता ॥ ४ ॥

## ११

# श्रीश्रेयांसजिनस्तुतिः

### श्लोकः १

जिनवर!०—प्रताम्बुना हृत उदयन् भवदवः संसारदावानलो येन। 'नतः' प्रह्वीभूतः। तापातङ्काभ्यां—परितापभयाभ्यां मुक्त!। महानाम्—उत्सवानाम् आगम!—आगमन! उल्लसत् यद् भवदवनं—त्वद्रक्षणं ततः। 'हन्त' कोमलामन्त्रणे। 'आपातम्' अप्रतिपाति। 'कं' सुखम्। उक्तः—अभिहितः महागमः— महासिद्धान्तो येन ॥ १ ॥

### श्लोकः २

जिनसमुदयं०—'भवं' संसारम्। 'अदरदम्' अभयदम्। 'रुच्या' कान्त्या। 'कान्तं' मनोज्ञम्। भवं किं० ? 'महैः'—उत्सवैः कृत्वा अमितम्—अगणितं मोहं राति—ददातीति तम्। कुलादीनाम्—अष्टमदस्थानानामनुकूलतामवो—अनुरूपेणापध्यानचित्तेनोत्थो यो मदस्तं रदति—विलेखयति यस्तम्। 'रुच्या' भक्त्या। अकस्य—दुःखस्यान्तो यस्मात् तम्। 'महामि' पूजयामि। 'तमोहरम्' अज्ञानहरम् ॥ २ ॥

### श्लोकः ३

शुचिगम० 'अनवरतं' निरन्तरम्। 'अलोभावस्थां निर्दम्भदशामाश्रयन्। समयः किम्भूतः 'अमितः' सर्वतः अयशो हरन्। गलन् नवरतमलः—अभिनवनिधुवनवध्यमानं कर्म यस्मात्। मनः किं० ? भावस्य—शुभध्यानस्य स्थाम—बलं तस्याश्रयं—गृहम्। नयैः शोभितः ॥ ३ ॥

**श्लोकः ४**

सुकृत०—हे ‘अपविफलकरा’ अप—गतं विफलं—वन्ध्यं कर्म यस्याः, कं सुखं रातीति करा, अप—गतो विफलः मोघः करो—दण्डो यस्याः, सा इत्येकमेव वा पदम् । दिवि स्वर्लोके त्यागेहा—दानेच्छा यस्याः सा, नृभवस्पृहयालुतया द्योस्त्यागेहा वा यस्याः सा । ‘द्युत्या’ कान्त्या । ‘घनाघनराजिता’ मेघवच्छोभिता । घण्टादीनि करे यस्याः सा । ‘अगेहा’ निर्गृहा या बहुपापनरैः—पापिष्ठमनुष्यैरजिता ॥४॥

## १२

# श्रीवासुपूज्यजिनस्तुतिः

**श्लोकः १**

पद्मोल्लासे०—सती—शोभना धीर्यस्य । लोकं किम्भूतम् ? नास्ति पाताशा यस्य तम् । रुचिराश्च पवित्राश्च रुचिरपवित्राः, तान् न सहन्ति (न्ते) ते तदसहाः, ते च ते अरयश्च तेषां प्रभा—कान्तिः, ततो नास्ति सा यस्य तस्यामन्त्रणम् । ‘अव’ रक्ष । हे ‘सद्धीर !’ सतां मध्ये धीर ! त्वम्, संश्चासौ धीरश्चेति वा । त्वं किं० ? ‘पाता’ रक्षिता । शमे रुचिर्यस्यासौ शमरुचिः । हे ‘अपवित्रास !’ अपगतभय ! । हारी मनोहरः प्रभावो यस्य, अथवा हे शमरुचिर ! शमे रुचिं रातीति शमरुचिरः । ‘हे पवित्रासहारिप्रभाव !’ वज्रमयहृदनुभाव ! ॥ १ ॥

**श्लोकः २**

लोकानां०—‘हृद्या’ मनोज्ञा । ‘राजी’ श्रेणिः । ‘वने’ विपिने । ‘अत्र’ इह । ‘भवतु’ अस्तु । दमे रसो यस्याः सा । लोकानां ‘अर्थान्’ धनादीन् पूरयन्ती । ‘अतापा’ तापरहिता । ‘तमोहा’ अज्ञानहरा । या ‘राजीवनेत्रा’ कमलनयना । भवं तुदतीति भवतुद् । अमरसार्थेन देवगणेन आनता । ‘अपातमोहा’ पातमोहाभ्यां रहिता ॥ २ ॥

**श्लोकः ३**

उत्तुङ्गस्त्वय्य०—शस्तः—प्रशस्तः आदरो यस्य, शस्ते—कल्याणे वा आदरो यस्य । हे ‘शस्त !’ प्रशस्त ! ‘अदर !’ निर्भय ! इति पदद्वयं वा । अति—अत्यन्तं क्षतः शुक्—शोको येन तस्मिन् । सन्—शोभनोऽनेकान्तः स्याद्वादो यत्र । सुकृतं किम्भूतम् ‘सिद्धान्तरागः’ सिद्धविरह आगो—अपराधो यतस्तत् । सुष्ठु शोभना आदेशा यत्र तस्यामन्त्रणम् । ‘स्तात्’ अस्तु । अरातीनां—वैरिणां क्षतं यस्मात् एतादृशं यत् शुचि गम्यं तस्य सदने ॥ ३ ॥

**श्लोकः ४**

वाग्देवि०—शङ्काया अन्तो यत्र । ‘देहि’ वितर । वादे किम् ? नव्यानि ईरितानि—प्रेरितानि रणानि येनैतादृशं कुशलं यत्र । वस्तुतः तादृशं कुशलं यस्या इति सम्बोधनमेव वा । प्रसादं किम्० ? प्रपूर्णा आशा यस्मात् । हे ‘कान्ते !’ मनोज्ञे ! । देहिना—प्राणिनां नव्ये !—स्तुत्ये ! । अरीणां—वैरिणां तरणं, लक्षणया विजयस्तत्र कुशले !—दक्षे ! । सु—शोभना भ्रूः सुभ्रूस्तया ॥ ४ ॥

# १३

# श्रीविमलजिनस्तुतिः

**श्लोकः १**

**नमो हतरणायते !०**—हे विमल ! । हे 'हतरणायते !' हतरणा—हतसङ्ग्रामा आयतिः—उत्तरकालो यस्य, हता—अपनीता वा रणायतिर्येन । हे 'समाजित !' सेवित ! कैः ? असुरैः । किम्भूतैः ? 'विभासुरैः' दीप्यमानैः । कया ? 'पुण्याशया' धर्मलिप्सया । हे 'न समदमाय' ! सह मदमायाभ्यां वर्तते यः सः सम० । हे 'पुण्या० !' पुण्यः—पवित्रः आशयो यस्य । हे 'असमाजित !' न समया जिता विभा कान्तिर्यस्य । हे 'विमलविश्वमारक्षते !' मारस्य जनिता क्षतिः मारक्षतिः, विश्वा—सर्वा चासौ मारक्षतिश्च विश्वमारक्षतिः, मलश्च मारक्षतिश्च विश्वमलविश्वमारक्षती, विगते ते यस्मात् । अथवा विमला—निर्मला विश्वा—पृथ्वी यस्मात् मारस्य क्षतिर्यस्माद् इति सम्बोधनद्वयम् । हे 'विमल !' निर्मल !, विश्वस्य—सर्वस्य मारस्य—रणस्य क्षतिर्यस्मादिति वा । 'असमदमाय' निरुपमेन्द्रियजयाय । 'मोहतरणाय' मोहस्य तरणं यस्मात् तस्मै । 'विश्वं' जगद् आ समन्ताद् रक्षते 'ते' तुभ्यं नमोऽस्तु इत्याद्यूह्यम् ॥ १ ॥

**श्लोकः २**

**महाय तरसा०**—अजेषु—सिद्धेषु मध्ये गतिर्येषां एतादृशा ये बोधिदाः—तीर्थकृतस्तेषाम्, 'अहो' इत्याश्चर्ये, 'दया' करुणा, 'वः' युष्माकं 'महाय' महोत्सवाय भवतु । 'तरसा' वेगेन । 'हिता' पथ्या । कीदृशानाम् ? 'भवतुदां' भवं तुदन्तीति भवतुदस्तेषाम् । 'तता' विस्तीर्णा । सह कलहेन अस्ति या सा सकलहा, न तादृग् असकलहा । 'आभया' शोभया कृत्वा 'असमाना' निरुपमाना । महता—आयतेन रसेन—शान्तारव्येन आहिता—स्थापिता । 'जगति' लोके । 'अधिदाना' अधिकं दानं यस्याः सा । 'महोदया' महानुदयो यस्याः । 'दान्तता०' दान्ततया न स्तः सकलौ—निःशेषौ हासमानौ मोहप्रकृतिभेदौ यस्यां सा । नास्ति भयं साध्वसं यस्याः सा अभया ॥ २ ॥

**श्लोकः ३**

**क्रियादरमनन्तरा०**—'वैभव' विभुसम्बन्धि मतं 'मतम्' अभीष्टं । 'वैभवं' सम्पदं । 'अरं' अत्यर्थं क्रियात् । 'अनन्तरागततया' अविरहशिष्यप्रशिष्यादिसन्ततिप्राप्ततया । 'सदा' सर्वदा । 'चितं' व्याप्तं पुष्टम् । समुदा—सहर्षेण इतं—प्राप्तम् । सती आशा यस्य तं 'अवता' रक्षता 'शमवता' शान्तेन 'अभवेन' भवरहितेन अर्थात् तीर्थकृता 'उदितं' कथितम्, अत एव 'समुदितं' सामस्त्येन उदयं प्राप्तं 'भवे' संसारे । 'अनोदितम्' अप्रेरितम् । क्रियायामादरो यत्र तत् । अनन्तो यो रागस्तेन ततैः—विस्तीर्णैर्याचितम्—अध्येतुं प्रार्थितम् ॥ ३ ॥

**श्लोकः ४**

**प्रभावितरतादरम्०**—रोहिणी शं वितरतात् । कीदृशम् ? ईहितैः—वाञ्छितैः कृत्वा 'अशुक्' शोकरहितं 'च' पुनः 'उरु' विस्तीर्णम्, अतिशयितः प्रभावी प्रभावितरः, तस्य भावस्तत्ता तया आदरो यत्र । 'अरम्' अत्यर्थम् । 'आशु' शीघ्रम् । रोहिणी कीदृशी ? 'प्रभा' प्रकृष्टा भा यस्याः सा । सुरभि—

याता—गोगता, सा चासौ तारोहिणी च—तारविचारिणी च सुरभियाततारोहिणीति वा । अनन्यजितदण्डे भर्त्तरि आशा यस्य ईदृशो यो मारः—कामस्तेनोचिता योग्या । सुरेभ्यो भीः सुरभीस्तया अतता । गुरुणा चापेन राजितः करो यस्याः सा । आ—समन्तात् रोचिता—श्रद्धिता ॥ ४ ॥

## १४

# श्रीअनन्तजिनस्तुतिः

**श्लोकः १**

**कलितमोदमनन्त०**—कलितः—प्राप्तो मोदो—हर्षो येन । 'अनन्तरसाश्रये' अनन्तः—अपर्यवसानो रसः—शान्ताख्यस्तदाश्रये । कलितमसोः रणमोहयोः दमनम् । 'तरसा' वेगेन । 'आश्रये' भजे ॥ १ ॥

**श्लोकः २**

**जिनवरा गततापं०**—'जिनवराः' तीर्थङ्कराः । गतौ तापदरौ यस्या अत एवोचिता—भजमाना ताम् । आजिः सङ्ग्रामो नवानुरागः ततापद्—विस्तीर्णापत् ताभिः अरोचिताम्—अनभिमताम् ॥ २ ॥

**श्लोकः ३**

**सुरसमान०** सुरसं मानसं—हृदयं यस्य एतादृशो दक्षो—निपुणो गणधरादिः तस्य रहस्य । 'ते' तव घनानि—निबिडानि प्रभासुराणि—देदीप्यमानानि समानानि मानोपेतानि सन्ति—शोभनानि अक्षराणि यस्य ॥ ३ ॥

**श्लोकः ४**

**सदसि रक्षति०**—'सदसि' सभायाम् । 'रक्षति' अवति । 'भासुरवाजिनं' दीप्यमानतुरङ्गं इता । 'सदसिः' सत्खड्गा । नास्ति क्षतिर्यस्याः सा अक्षतिः, ईदृशी भा—कान्तिर्यस्याः । 'सुखा' सुशब्दा । 'जिनं' भगवन्तं प्रणता ॥ ४ ॥

## १५

# श्रीधर्मजिनस्तुतिः

**श्लोकः १**

**श्रीधर्म !०**—कर्मद्रौ—कर्मवृक्षे वारणो—हस्ती तस्य । सती—शोभनाऽऽयतिर्यस्य ॥ १ ॥

**श्लोकः २**

**गिरा त्रिजगदुद्धारं०** गया—कान्त्या असमाना—अनुपमा । श्रिया भासमाना । अततः—अकृतोऽनयो यया सा ॥ २ ॥

**श्लोकः ३**

**वचः पापहरं०**—'सातङ्के' सभये । वलिभिः—कुतीर्थ्यैः नोदितं—प्रेरितम् ॥ ३ ॥

**श्लोकः ४**

**दद्युः प्रसादाः०**—शर्क्ति—बलम् । अत्याजित आदरो यैस्ते ॥ ४ ॥

१६

# श्रीशान्तिजिनस्तुतिः

**श्लोकः १**

अस्याभूद्०—'अक्षोदम्' अक्षुण्णम् । 'भरतस्य' भरतक्षेत्रस्य । 'वैभवं' विभुत्वम् । 'अयं' भाग्यम् । वैभवं किम्भूतम् ? सारेण—बलेन अजितम्, आरेण सहाजिर्यत्र तस्य भावस्तत्ता सह तयाऽस्तीति वा । 'दक्षः' निपुणः । 'अदम्भरतस्य' अमायानिधुवनस्य । 'वै' निश्चितम् । 'भवभयं' संसारभयम् । 'साराजितं' श्रीशोभितम् । 'तनु' कुरु । अतः—हेतोः ॥ १ ॥

**श्लोकः २**

येषां चेतसि०—भवतां किम्भू० ? प्रज्ञालाभो—धीप्राप्तिस्तद्वतां प्रज्ञालाभवतां येषां क्रियासु सतीषु ( रुचिता )—प्रज्ञानकर्मसमुच्चयादरो जात इत्यर्थः । 'अरम्' अत्यर्थं भावनानां—अनित्याद्यनुप्रेक्षाणां आभोगो—विस्तारस्ततः । 'प्रज्ञालाः' धीशालिनः । उचितारम्भाणां सदारम्भाणाम् अवनाः—रक्षकाः ॥२॥

**श्लोकः ३**

मिथ्यादृष्टि०—आचारेणोचितम् । 'अरयम्' अवेगम् । अदम्भैः—अशठैः अवारित !—अनिषिद्ध ! । 'अपाप !' अदुरित !, 'वाचा' वाण्या 'रोचित !' अभिमत ! । मानः—अहङ्कारः मारः—कामः यमः—कृतान्तस्तान् द्यति इति । 'वा' पूरणे । 'चारो !' अभिराम ! । 'चितमानमारयमदं' चितान्—पुष्टान मानादीन् द्यतीति वा । चित्ते किम्भू० ? आवारितापापहे ॥ ३ ॥

**श्लोकः ४**

शत्रूणां घन०—'पातात्' रक्षतात् । अनतानां मानवासुराणां हितः । सुमुदां—सुहर्षाणां राजिषु—श्रेणिषु । 'रुच्या' मनोहरा । पातः—पतनम्, अदानं—अवितरणम्, तमः—अज्ञानम् । 'नवासु' नव्यासु 'अरुच्या अनभिलाषेण रहिता । सुष्ठु मुद्रा यस्याः सा । 'आजिषु' सङ्ग्रामेषु ॥ ४ ॥

१७

# श्रीकुन्थुजिनस्तुतिः

**श्लोकः १**

स जयति०—'सुरमणीनां' सुररत्नानां 'वैभवे' विभुत्वे 'सन्निधाने' सन्ति निधानानि यत्र, सति निधाने इति वा । 'वैभवे' विभवसम्बन्धिनि । नास्ति हृतिर्यस्य तदहृति । 'सुरमणीनां' सुस्त्रीणाम् । 'वै' निश्चितम् । 'भवे' संसारे । 'सन्निधाने' समीपे ॥ १ ॥

**श्लोकः २**

जयति जिनततिः०—अमदैः—अनहङ्कारैः यतिभिर्महिता पूजिता । 'अरम्' अत्यर्थम् । 'रीणाऽऽम-पाशं' क्षीणरोगपाशम् । 'मदयति' मत्तं कुरुते । 'महि' उत्सवयुक्तम् । 'तारं' उज्ज्वलम् । अपगता आशा यस्य तदपाशम् ॥ २ ॥

**श्लोकः ३**

अवतु गदित०—परमस्य—उत्कृष्टस्य तरणस्य हेतुः—निदानम्। 'छायया' ગોભયા । 'भासमानैः' दीप्यमानैः । अपरेषां मतमेव रणम् । छायया किम्भूतया? अतुच्छो—बहुल आयो—लाभो यस्याः । आभया—कान्त्या असमानैः—निरुपमानैः, अभयैः असमानैश्चेति वा ॥ ३ ॥

**श्लोकः ४**

कलितमदनलीला०—'सदसि' सत्खड्ग। । 'उचितमारात्' अनुरूपकामात् । 'धाम' गृहम् । 'हन्त' इत्यामन्त्रणे । 'अपकारं' (अपराधम्) 'सदसि' पर्षदि । 'रुचितम्' अभिमतम् । 'आराद्धा' आसेविता । अपकारं किम्भूतं नास्ति महः—उत्सवो यत्र तदमहम् । तापं करोतीति तापकारम् ॥ ४ ॥

## १८

# श्रीअरजिनस्तुतिः

**श्लोकः १**

हरन्तं संस्तवी०—आनमन्तः असुरसार्थाः—दैत्यगणाः वाचंयमाः गुनयश्च यस्य सः । दग्गो गाया रतं—निधुवनं आधिः मानसी व्यथा तासां यत् पापं तं (तत्) द्यति—खण्डयतीति तम् । हतः अमानः—अप्रमाणः मदः अहङ्कारो येन तस्यामन्त्रणम् । यमं मृत्युं द्यति—खण्डयतीति तम्, यमान्—महाव्रतानि ददातीति तमिति वा । हे 'भरताधि!' भरतस्य भरतक्षेत्रस्य अधिप! स्वामिन्!, चक्रिजिनत्वात् ॥ १ ॥

**श्लोकः २**

भीमभवं हरन्तं० सारतरणस्य कामपारगमनस्याधिकार इव मुदिता—परसुखतुष्टिः तस्याः पदस्थानम् । उत्कृष्टा या लक्ष्मीर्यस्य यस्माद्वा । 'अविरतम्' अनारतम् । 'उत्करं' समूहम् । भीमभवं किम्भू० ? रणं च आधिश्च रणाधी ते करोतीति तत्कारम् । उदिता आपद् यस्मात् तम् । उत्करं किं० ? उद्यमेन—अभियोगेन ये विरताः—निवृत्तास्तेषां मुदं करोतीति तम् ॥ २ ॥

**श्लोकः ३**

भीमभवोदधे०—'अभवत्' अभूत् । 'अवतः' रक्षतः । 'यशः' श्लोकः । अभि सामन्तात् तरणेन । जिनपतिमतं किम्भू० ? 'न' नो 'मादितं' उन्मादितम् । नयं 'इतं' प्राप्तम् । 'हि' निश्चितम् । भवदवे—संसारदवाग्नौ तोय!—जलसम! । 'रणेन' सङ्ग्रामेण । 'अदितम्' अखण्डितम् । 'न यमितं' न बद्धम् । 'हितं' पथ्यम् ॥ ३ ॥

**श्लोकः ४**

चक्रधरा०—प्रभासुरो—देदीप्यमानो यो विनतातनुभवो—गारुडस्तस्य पृष्ठम् । अनुदिता—अनुदीर्णा आपद् यस्याः । 'अरम्' अत्यर्थम् । गता आरवाग्—शात्रववाणी यस्याः । सुरैः—देवैः विनता—विशेषेणानता । 'तनुभवपृष्ठं' स्वल्पभवप्रश्नम्, स्वल्पभवोत्तरकालं वा अनु—लक्ष्यीकृत्य दितापदा—खण्डितास्थाना अत एव रङ्गेण तारा वाग्—वाणी यस्याः सा ॥ ४ ॥

## १९

# श्रीमल्लिजिनस्तुतिः

**श्लोकः १**

**महोदयं प्रवितनु०**—नास्ति घनं अघं यस्य । नोदितौ—प्रेरितौ परौ—प्रकृष्टौ मोहमानौ—अज्ञानाहङ्कारौ येन । अदिताः—अखण्डिताः पराः—प्रकृष्टाः ऊहा—विचाराः यत्र तादृशं मानसं यस्य ॥ १ ॥

**श्लोकः २**

**मुनीश्वरैः स्तुत !०**—दानं त्यागः तामरसानि—कमलानि तैः सहित ! । शेषं स्पष्टम् ॥ २ ॥

**श्लोकः ३**

**जिनः स यं०**—'मुदा' हर्षेण । अनेकयोगिभिः पठितम्, 'रसं' शान्ताख्यं 'गतं' प्राप्तम् । 'अपरागं' गतरागं यथा स्यात् तथा । उदारं च तत् सङ्गतम् । अपरागमैः—अन्यशास्त्रैः अहृतम् ॥ ३ ॥

**श्लोकः ४**

**तनोतु०**—'अनाविला' निर्मला । सह भया वर्तते इति सभा । 'गवि' पृथिव्याम् । कृतं—विहितं धीरतापदं—धैर्यस्थानं यया । अविकृता—अविकारमाग् धीर्यस्याः । तापं ददातीति तापदा, न तादृग् अतापदा । कृतधीरतास्पदा वाऽऽपदा (३—१) अविकृतधीरिति वा ॥ ४ ॥

## २०

# श्रीमुनिसुव्रतजिनस्तुतिः

**श्लोकः १**

**तव मुनि०**—वनं—काननं । घनो—मेघः । रोहितं—पाटलम् । मानिनां तमसः—अज्ञानस्य पापस्य वा हरणम् । 'अनघ !' निष्पाप ! । इतौ—गतौ मोहरणौ—अज्ञानसङ्ग्रामौ यस्मात् ॥ १ ॥

**श्लोकः २**

**अवति जगन्ति०**—आवलिः—श्रेणिः । 'तरसा' वेगेन । 'ईहितानि' वाञ्छितानि । सु—शोभनो रवो यस्याः सा । मयि किं० ? रसं भजतीति रसभाक् तस्मिन् । अवलितः अनपगतः रसः—शान्ताख्यो यस्य तस्मिन् । सुरवारेण—देवगणेन सभाजितया सेवितया ॥ २ ॥

**श्लोकः ३**

**यतिभिरधीत०**—अघं—पापं तदेव नगः—शैलः । यतिभिः किम्भू० ? न सति भङ्गो मानो मरणं च येषां तैः । योगं बिभर्ति इति योगभृत् तम् । 'अनु' लक्ष्मी (क्षी ?) कृत्य । घनाः—निबिडाः गमाः—भङ्गाश्च यत्र । 'रणैः' सङ्ग्रामैः रहितम् । अनुयोगैः भृतं—पूर्णम् ॥ ३ ॥

**श्लोकः ४**

**वितरतु वाञ्छितं०**—अयशो हरतीति अयशोहृत् । इतं—गतं तमः—पापं यस्याः । महान्तः शुभविनोदाः—कल्याणविलासा यत्र तादृशानि विमानानि विद्यन्ते येषां तेषाम् । 'हृदि' हृदये । वाञ्छितं

किम्भू०? 'ततं' विस्तीर्णम् आमं– रोगं जहातीत्यामहा । ततौ विस्तीर्णौ मामहौ–लब्ध्युत्सवौ यस्याः सा इत्येकमेव वा पदम् । 'भविनो' भव्यस्य । 'दिवि' स्वर्गे । 'मानवताम्' अहङ्कारिणाम ॥ ४ ॥

## २१

# श्रीनमिजिनस्तुतिः

श्लोकः १

यतो यान्ति क्षिप्रं०–'महाविभावर्यो' महारजन्यः । 'नाशं' ध्वंसं, 'अनलसं' आलस्यरहितम्, 'आनन्दितं' हृष्टं, 'अदः' एतत्, विभया–कान्त्या वर्यो मुख्यः, 'अनाशङ्कं' आशङ्कारहितम् । 'अनलसमानम्' अग्नितुल्यम्, दितः–खण्डितो मदः–अहङ्कारो येन ॥ १ ॥

श्लोकः २

भवोद्भूतं भिन्द्याद्०–'जिनानां' तीर्थकृतां, 'आयासं' प्रयासं, चरणेन–चारित्रेण मुदिता–हृष्टा आली–श्रेणिः . . . [ अग्रेतनोऽवचूरिपाठो विशीर्णः ]

## २२

# श्रीनेमिजिनस्तुतिः

[ अस्या अवचूरिर्विनष्टा ]

## २३

# श्रीपार्श्वजिनस्तुतिः

[ प्रथमकाव्यावचूरिर्नष्टा ]

श्लोकः २

तीर्थे०–'भवतु' अस्तु । अस्तानि–निरस्तानि अरिभीश्च–शत्रुभीतिश्च मारिश्च भीमा भीषणा अलीकाली–अनृतश्रेणिरेव कालकूटं यया सा । 'भवविभवविदां' संसारविभवप्राप्तानां 'समूहे' चक्रे 'अकलितकलितया' अधृतरणतया 'उल्लासं' विलासं'ऊहे' वहति स्म । मायामानौ–दम्भस्मयौ हरतीति मायामानहर्त्री । किम्भू० ? दत्तो विश्वासो यत्र एतादृशं यत् विश्वं–जगत् तेन अनाप्ता–अप्राप्ता अनाप्ताभिशङ्का–अशिष्टशङ्का यस्यां सा । विमदा मदरहिता चासौ विमदनत्रासमोहा–गतकामभयाज्ञाना च । असमो–निरुपम ऊहो यस्याः ॥२ ॥

श्लोकः ३

गौरा गौरातिकी०–'लोकालोकार्थवेत्तुः' सर्वज्ञस्य 'गौः' वाणी 'मे' मम 'अलम्' अत्यर्थं मुदं–हर्षं देयात् । लोका० किम्भू० ? आगौरा–पाण्डुरा अतिशयिता कीर्तिर्यस्य । गौः किम्भू० ? परमः–अतिशयितो यः परेषां मतस्य ह्रासः ततो यो विश्वासः–विश्रम्भस्तेन विश्वादेया–जगदुपादेया । पुनः

કિં૦ ? જનિતો—વિહિતો જનિતનૂભાવો—જન્મક્રમભાવો યેષાં તેભ્યઃ તારઃ અવતારો યસ્યાઃ । પુનઃ કિં૦ ? નયવિનયયોર્યો વિવિસ્તસ્ય યો વ્યાસો—વિસ્તરઃ સ ચ માનં—પ્રમાણં ચ તાભ્યાં અસમાના—નિરુપમા । નાસ્તિ ભઙ્ગો યસ્યાઃ સા અભઙ્ગા । અભઙ્ગાનુયોગૈઃ અસુગમાઃ—દુર્ગમા યે સુષ્ઠુ શોભના ગમાસ્તાન્ યુનક્તીતિ તદ્યુક્ । પ્રાકૃતેનાઽલઙ્કૃતા ॥ ૩ ॥

**શ્લોકઃ ૪**

**લોકે લોકેશતુલ્યા૦**—'લોકે' જગતિ । લોકેશૈઃ—લોકપાલૈઃ તુલ્યા—સ્તુત્યા । સુરસા યે સુરાસ્તેષાં સભાં રઞ્જયન્તી—રાગવતીં કુર્વતી । 'વ્યૂહં' વિશિષ્ટોહં 'રિપૂણાં' વૈરિણાં 'વ્યૂહં' ચક્રં 'જયન્તી' પરાભવન્તી । જનાનાં ભજનેન ભવદ્ ગૌરવં યસ્યાઃ સા । મારેણ—કામેન વામા મનોજ્ઞા યા સા । અકસ્ય—દુઃખસ્ય અન્તો યસ્યાઃ સા । 'સંસ્તવે ચ' પરિચયે ચ 'સ્તવે ચ' સ્તુતૌ ચ ઉચિતા રુચિર્યસ્યાઃ સા ઉચિતરુચિઃ, ઉચિતરુચિં અતિશયિતા સા ઉચિતરુચિતમા । 'અહિપસ્ય' ધરણેન્દ્રસ્ય 'કાન્તા' સ્ત્રી પદ્માવતી । ઈરિતાનિ—ક્ષિપ્તાનિ દુરિતાનિ ચ દુરન્તાહિતાનિ ચ યૈસ્તેષામ્ । હિતાનાં 'આલિં' શ્રેણિં અદ્ય દધાદ્ ॥ ૪ ॥

## ૨૪

# શ્રીમહાવીરજિનસ્તુતિઃ

**શ્લોકઃ ૧**

**તવ જિનવર ! તસ્ય૦**—હે 'મુદિત !' હૃષ્ટ ! હે 'વિભવ !' ભવરહિત ! 'સન્નિધાને' સમીપે । સહ મોહેન વર્તત ઇતિ સમોહઃ, ન તાદૃગ્ ઇતિ અસમોહસ્તસ્ય । હે સિદ્ધાઃ અર્થાઃ યસ્ય । નામ ઇત્યામન્ત્રણે । ક્ષમાં બિભર્તીતિ ક્ષમાભૃત્ । સન્નિધાને કિમ્ભૂ૦ ? કુત્સિતં મારં કામં, કૌ—પૃથિવ્યાં મારં મરણં વા અપહન્તીતિ તસ્મિન્ । યસ્ય 'વાચા' વાણ્યા 'રતઃ' રાગવાન્ 'અરતઃ' અનિધુવન ઇતિ વા, હસન્તાનામાવન્તત્વેન વાચાયાં—વાચિ રત ઇતિ વા । 'ઉદિતવિભવસન્નિધાને' ઉદિતો વિભવઃ—સારઃ સત્—શોભનં નિધાનં ચ યત્ર । અસમા ઊહા યસ્ય । સિદ્ધાર્થનામા યઃ ક્ષમાભૃત્—પાર્થિવસ્તસ્ય કુમાર ! । કિંવિશિષ્ટસ્ય તવ ? અપગતં હેયં યસ્ય તસ્ય વા ઇત્યવ્યયં પૂરણે । 'આચારતઃ' આચારાત્ ॥ ૧ ॥

**શ્લોકઃ ૨**

**નયકમલવિકાસને૦** તવ કિમ્ભૂ૦ ? 'રુચ્યા' કાન્ત્યા 'રવિભયા' સૂર્યરુચા 'સમાનસ્ય' તુલ્યસ્ય । મહે કિમ્ભૂતે ? અઙ્ગહારેણ અઙ્ગવિક્ષેપેણ આહિતે સ્થાપિતે । તવ કિં૦ ? અપ—ગતમ્ અરિજાતં—વૈરિવૃન્દં યતસ્તસ્ય । લાસ્યસ્ય—નાટ્યસ્ય ભારેણ ઉચિતે—અનુરૂપે । 'વર' પ્રધાન ! । 'વિભય !' ભયરહિત ! । 'અસમાનસ્ય' માનરહિતસ્ય । સુરી કિં૦ ? રુચ્યોઽઙ્ગે હારો યસ્યાઃ સા । મહે કિં૦ ? 'હિતે' પથ્યે । તવ કિં૦ ? પારિજાત ઇવ પારિજાતસ્તસ્ય । ભાસ્વન્તિ યાનિ મહેલાનાં—સ્ત્રીણાં આસ્યાનિ—વદનાનિ તેષાં ભયા—કાન્ત્યા રોચિતે ॥ ૨ ॥

**શ્લોકઃ ૩**

**વચનમુચિતમર્હતઃ૦**—પરમમ્—ઉત્કૃષ્ટં યત્ તરણં તસ્ય યો હેતુસ્તસ્ય લાભમ્ । 'ગુરૌ' મહતિ । 'આર્યે'

शिष्टम् । हे 'आनन्दित !' मुदित !। वचनं किं० ? अप—गतम् अयशो यस्मात्। 'भावतो' भावेन। 'भासमानस्य' दीप्यमानस्य। मारेण कामेन अजितम्। निःशेषितं रामापितं अपरमतमेव रणं येन । 'हे' इत्यामन्त्रणम् । अतुलानि—असमानानि अभङ्गुराणि—अभङ्गशीलानि अवार्याणि—निषेद्धुं अशक्यानि मानानि—प्रमाणानि यत्र । हे दितः—खण्डितः अपायो—विघ्नो येन । अर्हतः किम्भू० ? शोभा विद्यते यस्यासौ शोभावान् तस्य । भया—कान्त्या असमानस्य । मया—ज्ञानेन राजितं—शोभितम् ॥ ३ ॥

## श्लोकः ४

अहमहमिकया० सह कलकलशतेन—कोलाहलशतेन वर्तते या। रमया—लक्ष्म्या राजिता। पापस्य हाने त्यागे। कला मनोहरा आभा—शोभा यस्याः। मराले किं०? असन्तो विपक्षा यस्य तस्मिन्। 'अमराले:' देवश्रेणेः। न हस्या अहस्या। 'गमं' सदृशपाठम्। मङ्गलं किं० ? सकलकलशवत् सम्पूर्णकुम्भवत् तारम्—उज्ज्वलम् । आरस्य—अरिसमूहस्य आजिः—सङ्ग्रामस्तस्यास्तापम् अपहन्तीति सा । अनेके लाभा येषां तैः आश्रिता अङ्गीकृता। सन्तो विशिष्टाश्च पक्षा यस्य तस्मिन्। 'मराले' राजहंसे स्थिता। रहस्यभूत आगमो रहस्यागमस्तम् ॥ ४ ॥

समाप्ताऽवचूरी ॥



# श्रीऐन्द्रस्तुतिचतुर्विंशतिका

## मूलमात्रम् ॥

### श्रीऋषभदेव-अपराभिध-आदिनाथस्तुतिः

[ शार्दूलविक्रीडितम् ] पृष्ठ संख्या

ऐन्द्रव्रातनतो यथार्थवचनः प्रध्वस्तदोषो जगत्, १
सद्यो गीतमहोदयः शमवतां राज्याधिकाराजितः ।
आद्यस्तीर्थकृतां करोतु विहितं गुणश्रेणीर्दधन्नाभिभूः,
सद्यो गीतमहोदयः शमऽवतां राज्याऽधिका राजितः ॥ १ ॥

उद्भूताप्रतिरोधबोधकलितत्रैलोक्यभावव्रजा-
स्तीर्थेशास्तारसा महोदितभयाऽक्रान्ताः सदा शापदम् । २
पुष्णन्तु स्मारनिर्जयप्रसृमरप्रौढप्रतापप्रथा-
स्तीर्थेशास्तारसा महोदितभयाः कान्ताः सदोशापदम् ॥ २ ॥

जैनेन्द्रं स्मरतातिविस्तरनयं निर्माय मिथ्यादृशां, २
सङ्ख्यागमऽभङ्गमानसहितं हृद्यप्रभाः ! विश्रुतम् ।
मिथ्यात्वं हरदूर्जितं शुचिकथं पूर्णं पदानां मिथः,
सङ्ख्या गमभङ्गमानसहितं हृद्यऽप्रभावि श्रुतम् ॥ ३ ॥

या जाड्यं हरते स्मृताऽपि भगवत्यम्भोरुहे विस्फुरत्- ३
सौभाग्याश्रयतां हिता निदधती पुण्यप्रभाविक्रमौ ।
वाग्देवी वितनोतु वो जिनमतं प्रोल्लासयन्ती सदा-
ऽसौ भाग्याश्रयतां हितानि दधती पुण्यप्रभावि क्रमौ ॥ ४ ॥

*

### २- श्रीअजितजिनस्तुतिः

[ पुष्पिताग्रा ]

मुनिततिरपि यं न रुद्धमोहा, शमजितमारमदं भवन्दिताऽऽपत् । ४
भज तमिह जयन्तमाऽऽशुमीशं, शमऽजित माऽऽरमऽदम्भवन् ! दितापत् ॥ १ ॥

* अन्वय के अर्थ करवानी अनेक पद्धतिओ छे अमोए वर्तमानमां रुचिकर बनेली जे पद्धतिनो स्वीकार करेलो छे ते तो आ मूलपाठ पूर्ण थया पछी आपेला भाषांतरमां जोवा मळशे अहींआ तो बीजी पद्धतिनुं पण दिग्दर्शन थाय ते माटे, मात्र पहेला श्लोकमां पंक्तिने माथे अन्वय नंबरो आप्या छे

पृष्ठ

नियतमुपगता भवे लभन्ते, परमतमोहर! यं भयाऽनिदानम्।
हर रुचिर! ददद् जिनौघ! तं द्राक्, परमतमोहरयं भयानि दानम्॥ २॥

४ नयगहनमऽतिस्फुटानुयोगं, जिनमतमुद्यतमानसाः! धुतारम्।
जननभयजिहासया निरस्ताऽऽजि नमत मुद्यतमानसाधुतारम्॥ ३॥

५ पविमपि दधतीह मानसीन्द्रैर्महितमऽदम्भवतां महाधिकारम्।
दलयतु निवहे सुराङ्गनानामऽहितमदं भवतां महाधिकाऽरम्॥ ४॥

*

## ३—श्रीशम्भवजिनस्तुतिः

[स्कन्धकम्]

५ शम्भव! सुखं ददत् त्वं, भाविनि भावारवारवारण! विश्वम्।
वासवसमूहमहिताऽभाविनिभाऽवाऽरवारवाऽरण! विश्वम्॥ १॥

६ यद्धर्मः शं भविनां, सन्ततमुदितोदितोऽदितोदारकरः।
स जयतु सार्वगणः शुचिसन्ततमुदितोऽदितोदितोऽदारकरः॥ २॥

६ जैनी गीः सा जयतान्न यया शमितामिता मिताक्षररुच्या।
किं सन्तः समवतरन्नयया शमितामितामिताऽक्षररुच्या॥ ३॥

७ दलयतु काञ्चनकान्तिर्जनतामहिता हिता हि ताराऽऽगमदा।
इह वज्रशृङ्खला दुर्जनतामऽहिताहिताहितारागमदा॥ ४॥

*

## ४—श्रीअभिनन्दनजिनस्तुतिः

[द्रुतविलम्बितम्]

७ त्वमभिनन्दन! दिव्यगिरा निराकृतसभाजनसाध्वस! हारिभिः।
अहतधैर्य! गुणैर्जय राजितः, कृतसभाजन! साध्वसहारिभिः॥ १॥

७ भगवतां जननस्य जयन्निहाऽऽशु भवतां तनुतां परमुत्करः।
त्रिजगतीदुरितोपशमे पटुः, शुभवतां तनुतां परमुत्करः॥ २॥

८ त्रिदिवमिच्छति यश्चतुरः स्फुरत्सुरसमूहमऽयं मतमऽर्हताम्।
स्मरतु चारु ददत् पदमुच्चकैः, सुरसमूहमयं मतमऽर्हताम्॥ ३॥

८ धृतसकाण्डधनुर्धेतु तेजसा, न रहिता सदया रुचिराजिता।
मदहितानि परैरिह रोहिणी, नरहिता सदया रुचिराऽजिता॥ ४॥

*

## ५– श्रीसुमतिजिनस्तुतिः

[ स्कन्धकम् आर्यागीतिर्वा ]

नम नमदमरसदमरससुमतिं सुमतिं सदसदरमुदारमुदा। ८
जनिताऽजनितापदपदविभवं विभवं नर! नरकोन्तं कान्ताम् ॥ १ ॥

भवभवभयदाऽभयदावली बलीयोदयोदयाऽमायाऽऽमा। ९
ध्यादऽध्याऽमितमितशमा शमादिष्टदिष्ट वीजाऽबीजा ॥ २ ॥

दमदमऽसुगमं सुगमं, सदा सदानन्दनं दयाविद्याविदू। ९
परमऽपरमऽपार! पार, महामहा धीरधी रसमयं समयम् ॥ ३ ॥

काली कालीरऽसरसभावाभावाये नयनसुखदाऽसुखदा। ९
महिमहितनुता तनुतादितामानमानरुच्या रुच्या ॥ ४ ॥

*

## ६–श्रीपद्मप्रभजिनस्तुतिः

[ वसन्ततिलका ]

पद्मप्रभेश! तव यस्य रुचिर्मते सद्विश्वासमानसदयापर! भावि तस्य। १०
नोच्चैः पदं किमु पचेलिमपुण्यसम्पद्, विश्वासमान! सदयाऽपर! भावितस्य ॥ १ ॥

मूर्तिः शमस्य दधती किमु या पद्मानि, पुण्यानि काचन सभासु रराज नव्या। ११
सा स्तूयतांभगवतां विततिः स्वभक्त्या, पुण्याऽनिकाचन! सभा सुरराजनव्या ॥ २ ॥

लिप्सुः पदं परिगतैर्विनयेन जैनीं, वाचं यमैः सततमञ्चतु रोचितार्थाम्। ११
स्याद्वादमुद्रितकुतीर्थ्यनयावतारां, वाचंयमैः सततमं चतुरोचितार्थाम् ॥ ३ ॥

साहाय्यमत्र तनुषे शिवसाधने याऽपाता मुदा रसमयस्य निरन्तराये!। १२
गान्धारि! वज्रमुशले जगतीं तवाऽस्याः, पातामुदारसमयस्य निरन्तराये ॥ ४ ॥

*

## ७ श्रीसुपार्श्वजिनस्तुतिः

[ मालिनी ]

यदिह जिन! सुपार्श्व! त्वं निरस्ताकृतक्ष्मावनमद! सुरबाधा हृद्यशोभाऽवतारम्। १२
तत उदितमजस्रं कैर्बुधैर्गीयते नाऽवनमदसुर! बाधाहृद्! यशो भावतारम् ॥ १ ॥

जगति शिवसुखं ये कान्तिभिर्भासयन्तो– १२
ऽदुरितमदरतापध्यानकान्ताः सदाऽऽशाः।
जिनवरवृषभास्ते नाशयन्तु प्रवृद्धं,
दुरितमऽदरतापध्यानकान्ताः सदाशाः ॥ २ ॥

पृष्ठ १३ मुनिततिरपठद् यं वर्जयन्ती हतोद्य-
त्तमसमऽहितदाऽत्रासाऽऽधिमाऽऽनन्दिताऽरम् ।
समयमिह भजाऽऽप्तेनोऽमुमुच्चैर्दधानं,
तमऽसम ! हितदात्रा साधिमानं दितारम् ॥ ३ ॥

१३ अवतु करिणि याता साऽर्हतां प्रौढभक्त्या,
मुदितमकलितापाया महामानसी माम् ।
वहति युधि निहत्याऽनीकचक्रं रिपूणा-
मुदितमकलितापा या महामानसीमाम् ॥ ४ ॥

*

## ८—श्रीचन्द्रप्रभजिनस्तुतिः

[ मन्दाक्रान्ता ]

१४ तुभ्यं चन्द्रप्रभ ! भवभयाद् रक्षते लेखलेखा-
नन्तव्याऽपापमदमहते ! सन् ! नमोऽहासमाय ! ।
श्रेयः श्रेणीं भृशमऽसुमतां तन्वते ध्वस्तकामा-
नन्तव्यापाऽपमद ! महते सन्नमोहाऽसमाय ॥ १ ॥

१४ श्रेयो दत्तां चरणविलुठन्नम्रभूपालभूयो-
मुक्तामालाऽसमदमहिता बोधिदानामऽहीना ।
मोहापोहादुदितपरमज्योतिषां कृत्स्नदोषै-
र्मुक्ता मालाऽसमदमहिता बोऽधिदानाऽऽमहीना ॥ २ ॥

१५ रङ्गद्भङ्गः स्फुटनयभयस्तीर्थनाथेन चूला-
मालापीनः शमदमवताऽसङ्गतोपायहृद्यः ।
सिद्धान्तोऽयं भवतु गदितः श्रेयसे भक्तिभाजा-
माऽऽलापी नः शमदमवता सङ्गतोऽपायहृद्यः ॥ ३ ॥

१५ सा त्वं वज्राङ्कुशि ! जय मुनौ भूरिभक्तिः सुसिद्ध-
प्राणायामेऽशुचि मतिमऽतापाऽऽपदन्ताऽबलानाम् ।
दत्से वज्राङ्कुशभृदऽनिशं दर्पहन्त्री प्रदत्त-
प्राणा या मे शुचिमतिमता पापदन्तावलानाम् ॥ ४ ॥

*

## ९–श्रीसुविधिजिनस्तुतिः

[ ઉપજાતિઃ ]

यस्याऽतनोद् देवततिर्महं सुप्रभाऽवतारे शुचिमन्दरागे। १६
इहाऽस्तु भक्तिः सुविधौ दृढा मे, प्रभावतारेऽशुचि मन्दरागे ॥ १ ॥
अभूत् प्रकृष्टोपशमेषु येषु, न मोहसेना जनितापदेभ्यः। १६
युष्मभ्यमाऽऽप्ताः! प्रथितोदयेभ्यो, नमोऽर्हसेना! जनितापदेभ्यः ॥ २ ॥
वाणी रहस्यं दधती प्रदत्तमहोदयाऽवक्रिरनीतिहारि। १६
जीयाज्जिनेन्द्रैर्गदिता त्रिलोकीमहो! दयावक्रिरनीति हारि ॥ ३ ॥
ज्वालोज्ज्वलो विद्रुमकान्तकान्तिः, करोऽतुलाभं शमदम्भवल्याः। १७
ददन्नतानां ज्वलनायुधे! नः, करोतु लाभं शमदं भवल्याः ॥ ४ ॥

*

## १० श्रीशीतलजिनस्तुतिः

[ द्रुतविलम्बितम् ]

जयति शीतलतीर्थपतिर्जने, वसु मती तरणाय महोदधौ। १७
ददति यत्र भवे चरणग्रहे, वसुमतीतरणाय महो दधौ ॥ १ ॥
वितर शासनभक्तिमतां जिनावलि! तमोहरणे! सुरसम्पदम्। १८
अधरयच्छिवनाम महात्मनां, वलितमोहरणे! सुरसं पदम् ॥ २ ॥
भगवतोऽभ्युदितं विनमाऽऽगमं, जन! यतः परमापदमाऽऽदरात्। १८
इह निहत्य शिवं जगदुन्नतिं, जनयतः परमाऽऽप दमादरात् ॥ ३ ॥
[illegible]वरवैस्त्रिदशैरव सन्ततं, न परमच्छविमानविलासिता। १८
न घनशस्त्रकलाऽप्यरिदारिणी, न परमच्छवि! मानवि! लासिता ॥ ४ ॥

*

## ११–श्रीश्रेयांसजिनस्तुतिः

[ हरिणी ]

जिनवर! भजन् श्रेयांस! त्वां व्रताम्बुरुहोदय- १९
द्रवदव! नतोऽहं तापातङ्कमुच! महागम!।
गतभवनभ्रान्तिभ्रान्तिः फलैर्ग्रहिरुल्लस-
द्रुवदवनतो हन्ताऽऽपातं कमुत्तमहागम! ॥ १ ॥

पृष्ठ
१९ जिनसमुदयं विश्वाधारं हरन्तमिहाङ्गिनां,
भवमऽदरदं रुच्या कान्तं महामितमोहरम् ।
विनयमधिकं कारं कारं कुला दिविशिष्टता
भवमदरदं रुच्याऽकान्तं महामि तमोहरम् ॥ २ ॥
२० शुचिगमपदो भङ्गैः पूर्णो हरन् कुमतापहो
ऽनवरतमऽलोभावस्थामाऽऽश्रयन्नऽयशोऽमितः ।
जन ! तव मनो यायाच्छायामयः समयो गल
न्नवरतमलो भावस्थामाश्रयं नयशोमितः ॥ ३ ॥
२० सुकृतपटुतां विघ्नोच्छित्त्या तवाऽहितिक्षमा
ऽपविफलकरा द्युत्याऽगेहाऽऽधनाघनराजिता ।
वितरतु महाकाली घण्टाक्षसन्ततिविस्फुर
त्पविफलकरा द्युत्यागेहा घनाघनराजिता ॥ ४ ॥

*

## १२–श्रीवासुपूज्यजिनस्तुतिः

[ स्रग्धरा ]

२१ पद्मोल्लासे पटुत्वं दधदधिकरुचिर्वासुपूज्याऽर्कतुल्यो
लोकं सद्धीरपातारामरुचिरपवित्रासहारिप्रभाऽव ।
लुम्पन् स्वैर्गोविलासैर्जगति घनतमो दुर्नयध्वान्ततत्त्वा–
लोकं सद्धीर ! पाता शमरुचिरपवित्रास ! हारिप्रभाव ! ॥ १ ॥
२१ लोकानां पूरयन्ती सपदि भगवतां जन्मसंज्ञे गतिर्मे,
हृद्या राजी वनेऽत्राऽभवतुदऽमरसार्थानताऽपातमोहा ।
साक्षात् किं कल्पवल्लिर्विबुधपरिगता क्रोधमानार्त्तिमाया–
हृद्या राजीवनेत्रा भवतु दमरसाऽर्थानतापा तमोहा ॥ २ ॥
२२ उत्तुङ्गस्त्वय्यभङ्गः प्रथयति सुकृतं चारुपीयूषपीना–
ऽऽस्वादे शारदाऽऽदराऽतिक्षतशुचि सदनेकान्त ! सिद्धान्तरागः ।
रङ्गद्भङ्गप्रसङ्गोल्लसदसमनये निर्मितानङ्गभङ्ग–
स्वादेश ! स्वादऽराऽतिक्षतशुचिसदने कान्तसिद्धान्त ! रागः ॥ ३ ॥
२२ वाग्देवि ! प्रीणयन्ती पटुविविधनयोन्नीतशास्त्रार्थनिष्ठा–
शङ्कान्ते ! देहि नव्येरितरणकुशले ! सुस्तुवा देवि ! शिष्टम् ।

श्रद्धाभीजां प्रसादं सुमतिकुमुदिनीचन्द्रकान्ते! प्रपूर्णा-
ऽऽशां कान्ते! देहिनव्येऽरितरणकुशले! सुभ्रु! वादे विशिष्टम् ॥ ४ ॥

*

## १३- श्रीविमलजिनस्तुतिः

[पृथ्वी]

नमो हतरणायतेऽसमदमाय पुण्याशया, २३
समाजित! विभासुरैर्विमल! विश्वमारक्षते।
न मोहतरणाय ते समदमाय! पुण्याशया-
समाजित विभासुरैर्विमलविश्वमारक्षते! ॥ १ ॥
महाय तरसा हिताऽजगतिबोधिदानामहो!, २४
दया भवतुदां तताऽसकलहाऽसमानाऽऽभया।
महायतरसाहिता जगति बोऽधिदाना महो-
दया भवतु दान्तताऽसकलहासमानाऽभया ॥ २ ॥
क्रियादऽरमऽनन्तरागततया चितं वैभवं, २४
मतं समुदितं सदा शमवताऽभवेनोदितम्।
क्रियादरमऽनन्तरागततयाचितं वैभवं,
मतं समुदितं सदाशमऽवता भवेऽनोदितम् ॥ ३ ॥
प्रभा वितरतादऽरं सुरभियाऽतता रोहिणी- २५
हिताशुगुरु चाऽपराजितकराशमारोचिता।
प्रभावितरतादरं सुरभियाततारोहिणी,
हिताऽऽशु गुरुचापराजितकरा शमाऽऽरोचिता ॥ ४ ॥

*

## १४-श्रीअनन्तजिनस्तुतिः

[द्रुतविलम्बितम्]

कलितमोदमऽनन्तरसाश्रये, २६
शिवपदे स्थितमऽत्राभवापदम्।
त्रिदशपूज्यमनन्तजितं जिनं,
कलितमोदमनं तरसाऽऽश्रये ॥ १ ॥
जिनवरा गततापदरोचितां, २६
प्रददतां पदवीं मम शाश्वतीम्।

पृष्ठ

दुरितहृद्वचना न कदाचना
ऽऽजिनवरागततापदरोचिताम् ॥ २ ॥

२६ सुरसमानसदक्षरहस्य ! ते,
मधुरिमाऽऽगम ! सोऽस्तु शिवाय नः ।
जगति येन सुधाऽपि वनप्रभा
सुरसमानसदक्षर ! हस्यते ॥ ३ ॥

२६ सदसिरक्षतिभा सुरवा जिनं,
जगदिता फलकेषुधनुर्धरा ।
जयति येयमिह प्रणतीऽच्युता,
सदसि रक्षति भासुरवाजिनम् ॥ ४ ॥

*

## १५–श्रीधर्मजिनस्तुतिः

[अनुष्टुप्]

२७ श्रीधर्म ! तव कर्मद्रु–वारणस्य सदायते ! ।
रावं कर्तुं कृतद्वेपि–वारणस्य सदा यते ॥ १ ॥

२७ गिरा त्रिजगदुद्धारं, भाऽसमाना ततान या ।
श्रिया जीयाद् जिनाली सा, भासमानाऽततानया ॥ २ ॥

२७ वचः पापहरं दत्त–सातं केवलिनोदितम् ।
भवे त्राणाय गहने, सातङ्केऽवलिनोदितम् ॥ ३ ॥

२८ दद्युः प्रसादाः प्रज्ञप्त्याः शक्तिमत्याजितादराः ।
तस्या यया द्विषां सर्वे, शक्तिमत्या जिता दराः ॥ ४ ॥

*

## १६– श्रीशान्तिजिनस्तुतिः

[शार्दूलविक्रीडितम्]

२८ अस्याभूद् व्रतयाति नातिरुचिरं यच्छ्रेयसे सेवना–
दक्षोदं भरतस्य वैभवमयं साराजितं तन्वतः ।
लिप्सो ! शान्तिजिनस्य शासनरुचिं सौख्यं जयद् ब्रह्म भोः ।
दक्षोऽदम्भरतस्य वै भवमयं साराजितं तन्वऽतः ॥ १ ॥

२९ येषां चेतसि निर्मले शमवतां मोक्षाध्वनो दीपिका,
प्रज्ञालाभवतां क्रिया सुरचिताऽरं भावनाभोगतः ।

ते श्रीमज्जिनपुङ्गवा हतभया नित्यं विरक्ताः सुखं,
मह्यालीं भवतां क्रियासुरुचितारम्भावना भोगतः ॥ २ ॥ २९

मिथ्यादृष्टिमतं यतो ध्रुवमभूत् प्रध्वस्तदोषात् क्षिता-
वाचारोचितमानमारयमदम्भावारिताऽपाप ! हे ! ।
तं सिद्धान्तमभङ्गभङ्गकलितं श्रद्धाय चित्ते निजे,
वाचा रोचित ! मानमारयमदं भावारितापापहे ॥ ३ ॥ २९

शत्रूणां घनधैर्यनिर्जितभया त्वां शासनस्वामिनी,
पातादानतमानवासुरहिता रुच्या सुमुद्राजिषु ।
श्रीशान्तिक्रमयुग्मसेवनरता नित्यं हतव्यग्रता-
पातादानतमा नवासु रहिताऽरुच्या सुमुद्राऽऽजिषु ॥ ४ ॥ ३०

*

## १७–श्रीकुन्थुजिनस्तुतिः

[ मालिनी ]

स जयति जिनकुन्थुर्लोभसङ्क्षोभहीनो,
महति सुरमणीनां वैभवे सन्निधाने ।
इह भवति विना यं मानसं हन्त ! केषा-
महति सुरमणीनां वै भवे सन्निधाने ? ॥ १ ॥ ३०

जयति जिनततिः सा विश्वमाधातुमीशा-
ऽमदयतिमहिताऽरं किन्नरीणामपारम् ? ।
विलसितमपि यस्या हन्त ! नैव ह्या चित्तं,
मदयति महि तारं किन्नरीणामपारम् ॥ २ ॥ ३०

अवतु गदितमाप्तैस्त्वां मतं जन्मसिन्धौ,
परमतरणहेतुच्छायया भासमानैः ।
विविधनयसमूहस्थानसङ्गत्यपास्ता-
परमतरण ! हेऽतुच्छायया भाऽसमानैः ॥ ३ ॥ ३१

कलितमदनलीलाऽधिष्ठिता चारु कान्तात्,
सदसिरुचितमाराद् धाम हन्तापकारम् ।
हरतु पुरुपदत्ता तन्वती शर्म पुंसां,
सदसि रुचितमाऽऽराद्धाऽमहं तापकारम् ॥ ४ ॥ ३१

*

## १८–श्रीअरजिनस्तुतिः

[द्विपदी]

३२ हरणां संस्तवीम्यहं त्वामरजिन ! सततं भवोद्भवा-
मानमदसुरसार्थवाचंयम ! दमभरताऽऽधिपपदम् ।
विगणितचक्रवर्त्तिवैभवमुद्दामपराक्रमं हता-
मानमद ! सुरसार्थवाचं यमदं भरताधिपाऽऽ पदम् ॥ १ ॥
३२ भीमभवं हरन्तमपगतमदकोपाटोपमर्हतां,
सारतरणाधिकारमुदितापदमुद्यमविरतमुत्करम् ।
भक्तिनताखिलसुरमौलिस्थितरत्नरुचाऽरुणक्रमं,
धारत रणाधिकारमुदितापदमुद्यमविरतमुत्करम् ॥ २ ॥
भीमभवोदधेर्भुवनमेव यतो विधुशुभ्रमञ्जसा-
३२ ऽभवदवतो यशोऽभितरणेन न मादितं नयमितं हि तम् ।
जिनपसमयमनन्तभङ्गं जन ! दर्शनशुद्धचेतसा,
भवदवतोय ! शोभित ! रणेन नमादितं न यमितं हितम् ॥ ३ ॥
३३ चक्रधरा करालपरघातबलिष्ठमधिष्ठिता प्रभा-
सुरविनतानुभवपृष्ठमनुदितापदरं गतारवाक् ।
दलयतु दुष्कृतं जिनवरागमभक्तिभृतामनारतं,
सुरविनता तनुभवपृष्ठमनु दितापदरङ्गतारवाक् ॥ ४ ॥

*

## १९–श्रीमल्लिजिनस्तुतिः

[रुचिरा]

३४ महोदयं प्रवितनु मल्लिनाथ ! मे-
ऽघनाघ ! नोदितपरमोहमान ! सः ।
अभूर्महाव्रतघनकाननेषु यो,
घनाघनोऽदितपरमोहमानसः ॥ १ ॥
३४ मुनीश्वरैः स्मृत ! कुरु सौख्यमर्हतां,
सदा नतामर ! समुदाय ! शोभितः ।
धनैर्गुणैर्जगति विशेषयन् श्रिया,
सदानतामरस ! मुदा यशोऽभितः ॥ २ ॥
३४ जिनैः स यं पठितमनेकयोगिभि-
र्मुदा रसं गतमपरागमाऽऽह तम् ।
सदागमं शिवसुखदं स्तुवेतरा-
मुदारसङ्गतमऽपरागमाहतम् ॥ ३ ॥

પૃષ્ઠસંખ્યા

તનોતુ ગીઃ સમયરુચિં સતામના- ૩૫
વિલા સભા ગવિ કૃતધીરતાપદા ।
શુચિદ્યુતિઃ પટુરણદચ્છકચ્છપી-
વિલાસભાગઽવિકૃતધીરતાપદા ॥ ૪ ॥

*

## २०–श्रीमुनिसुव्रतजिनस्तुतिः

[ अवितथम् ]

તવ મુનિસુવ્રત ! ક્રમયુગં નનુ કઃ પ્રતિમા- ૩૫
વનઘન ! રોહિતં નમતિ માનિતમોહરણમ્ ।
નતસુરમૌલિરત્નવિભયા વિનયેન વિભ-
વનઘ ! નરો હિતં ન મતિમાનિતમોહરણમ્ ॥ ૧ ॥

અવતિ જગન્તિ યાઽઽશુ ભવતી મયિ પારગતા- ૩૫
વલિ ! તરસેહિતાનિ સુરવા રસભાજિ તયા ।
દિશતુ ગિરા નિરસ્તમદના રમણીહસિતા-
વલિતરસે ! હિતાનિ સુરવારસભાજિતયા ॥ ૨ ॥

યતિભિરધીતમાર્હતમતં નયવજ્રહતા- ૩૬
ઽઘનગમઽભઙ્ગમાનમરણૈરનુયોગભૃતમ્ ।
અતિહિતહેતુતાં દધદપારભવં રહિતં,
ધનગમભઙ્ગમાઽઽનમ રણૈરનુ યોગભૃતમ્ ॥ ૩ ॥

વિતરતુ વાઞ્છિતં કનકરુગ્ ભુવિ ગૌર્યયશો- ૩૬
હૃદિતતમા મહાશુભવિનોદિવિમાનવતામ્ ।
રિપુમદનાશિની વિલસિતેન મુદં દદતી,
હૃદિ તતમાઽઽમહાઽઽશુ ભવિનો દિવિ માનવતામ્ ॥ ૪ ॥

*

## २१–श्रीनमिजिनस्तुतिः

[ शिखरिणी ]

યતો યાન્તિ ક્ષિપ્રં નમિરઘવને નાઽત્ર તનુતે, ૩૭
વિભાવર્યો નાશઙ્કમઽનલસમાઽઽનન્દિતમદઃ ।
દધદ્ ભાસાંચક્રં રવિકરસમૂહાદિવ મહા-
વિભાવર્યોઽનાશઙ્કમઽનલસમાનં દિતમદઃ ॥ ૧ ॥

५४
३७ भवोद्भूतं भिन्द्याद् भुवि भवभृतां भव्यमहिता,
जिनानामाऽऽयासंचरणमुदिताऽऽली करचितम् ।
शरण्यानां पुण्या त्रिभुवनहितानामुपचिता-
ऽऽजिनानामायासंचरणमुदितालीकरचितम् ॥ २ ॥
३८ जिनानां सिद्धान्तश्चरणपटु कुर्यान्मम मनो-
ऽपराभूतिर्लोके शमहितपदानामऽविरतम् ।
यतः स्याच्चक्रित्वत्रिदशविभुताद्या भवभृतां,
परा भूतिर्लोकेशमहितपदानामविरतम् ॥ ३ ॥
३८ गजव्यालव्याघ्रानलजलसमिद्बन्धनरुजो-
ऽगदाक्षाऽलीकालीनयमवति विश्वासमहिता ।
जनैर्विश्वध्येया विघटयतु देवी करलस-
द्गदाक्षाली काली नयमऽवति विश्वासमहिता ॥ ४ ॥

*

## २२–श्रीनेमिजिनस्तुतिः

[ शार्दूलविक्रीडितम् ]

३९ त्वं येनाक्षतधीरिमा गुणनिधिः प्रेम्णा वितन्वन् सदा,
नेमेऽकान्तमहामना विलसतां राजीमतीरागतः ।
कुर्यात्तस्य शिवं शिवाङ्गज ! भवाम्भोधौ न सौभाग्यभाग्,
नेमे ! कान्तमहोमऽनाविल ! सतां राजीमतीरागतः ॥ १ ॥
३९ जीयासुर्जिनपुङ्गवा जगति ते राज्यर्द्धिषु प्रोल्लस-
द्धामानेकपराजितासु विभयासन्नाभिरामोदिताः ।
योधालीभिरुदित्वरा न गणिता यैः स्फातयः प्रस्फुर-
द्धामानेकपराजितासु विभया सन्नाभिरामोदिताः ॥ २ ॥
४० या गङ्गेव जनस्य पङ्कमखिलं पूता हरत्यञ्जसा,
भारत्याऽऽगमसङ्गता नयतताभायाचिता साऽधुना ।
अध्येतुं गुरुसन्निधौ मतिमता कर्तुं सतां जन्मभी-
भारत्यागमऽसङ्गता न यततामाऽऽयाचिता साधुना ॥ ३ ॥
४० व्योम स्फारविमानतूरनिनदैः श्रीनेमिभक्तं जनं,
प्रत्यक्षामरसालपादपरतां वाचालयन्ती हितम् ।
दद्यान्नित्यमिताऽऽम्रलुम्बिलतिकाविभ्राजिहस्ताऽहितं,
प्रत्यक्षामरसालपादपरताऽम्बा चालयन्तीहितम् ॥ ४ ॥

*

पृष्ठसंख्या

## २३–श्रीपार्श्वजिनस्तुतिः

[ स्रग्धरा ]

सौधे सौधे रसे खे रुचिररुचिरया हारिलेखारिलेखा, ૪૧
पायं पायं निरस्ताघनयघनयशो यस्य नाथस्य नाऽथ ।
पार्श्वं पार्श्वं तमोद्रौ तमऽहतमहमऽक्षोभजालं भजाऽलं,
कामं कामं जयन्तं मधुरमधुरमाभाजनत्वं जन ! त्वम् ॥ १ ॥
तीर्थे तीर्थेशराजी भवतु भवतुदऽस्मारिभीमारिभीमा- ૪૧
लीकालीकालकूटाऽकलितकलितयोल्लासमूहे समूहे ।
या मायामानहर्त्री भवविभवविदां सा सविश्वासविश्वा-
नाशानाशासिशङ्का विमदविदमनत्रासमोहाऽसमोहा ॥ २ ॥
गौरागौरातिकीर्तेः परमपरमतह्रासविश्वासविश्वा- ૪૨
ऽऽदेया देयान्मुदं मे जनितजनितनूभावतारावतारा ।
लोकालोकार्थवेत्तुर्नयविनयविधिव्यासमानासमाना-
ऽभङ्गा भङ्गानुयोगासुगमसुगमयुक् प्राकृताऽलङ्कृताऽलम् ॥ ३ ॥
लोके लोकेशनुत्या सुरससुरसभां रञ्जयन्ती जयन्ती, ૪૨
व्यूहं व्यूहं रिपूणां जनभजनभवद्गौरवा मारवामा ।
कान्ताऽकान्ताऽहिपस्येरितदुरितदुरन्ताहितानां हितानां,
दद्यादद्यालिमुच्चैरुचितरुचितमा संरावे च रावे च ॥ ४ ॥

*

## २४–श्रीमहावीरजिनस्तुतिः

[ अर्णवदण्डकम् ]

तव जिनवर ! तस्य बद्ध्वा रतिं योगमार्गं,
भजेयं महावीर ! पाथोधिगम्भीर ! धीरानिशम् ।
मुदित ! विभव ! सन्निधानेऽसमोहस्य सिद्धार्थ-
नाम ! क्षमाभृत् ! कुमारापहे यस्य वाचा रतः । ૪૩
मुनिजननिकरश्चरित्रे पवित्रे परिक्षीण-
कर्मा स्फुरज्ज्ञानभाक् सिद्धिशर्माणि लेभेतरा-
मुदितविभवसन्निधानेऽसमोहस्य सिद्धार्थ-
नामक्षमाभृत्कुमाराऽपहेयस्य वाऽऽचारतः ॥ १ ॥ ૪૪
नयकमलविकासने का सुरी विपायपोर-
नेत्राऽजनि प्रौढभामण्डलस्य क्षतध्वान्त ! हे ! ।

न तव रविभया समानस्य रुच्याऽङ्गहारा-
हितेऽपारिजातस्य भास्वन्! महे लास्यमारोचिते।
कनकरजतरत्नसालत्रये देशनां तन्वतो
ध्वस्तसंसार! तीर्थेशवार! द्युसद्धोरणी-
नत! वर! विभयासमानस्य रुच्याङ्गहारा
हिते पारिजातस्य भास्वन्महेलास्यमारोचिते ॥ २ ॥
४४ वचनमुचितमर्हतः संश्रय श्रेयसे प्रीणयद्
भव्य! भीमे दधद् ध्वस्ततापं भवाम्भोनिधौ,
परमतरणहेतुलाभं गुरावाऽऽर्यमानन्दिता-
ऽपायशो भावतो भाऽसमानस्य माराजितम्।
दलितजगदसद्ग्रहं हेतुदृष्टान्तनिष्पिष्ट-
सन्देहसन्दोह! निर्मोह! निःशेषिता-
परमतरण! हेऽतुलाभङ्गुरावार्थमानं दिता-
पाय! शोभावतो भासमानस्य माराजितम् ॥ ३ ॥
४५ अहमहमिकया समाराधुमुत्कण्ठितायाः
क्षणे वाङ्मयस्वामिनी शक्तिमह्नाय दद्यात्तरां,
सकलकलशता रमाराजिता पापहाने
कलाभा स्थिताऽसद्विपक्षेऽमरालेरवार्या गमम्।
दधतमिह सतां दिशन्ती सदैङ्कारविस्फार-
सारस्वतध्यानदृष्टा स्वयं मङ्गलं तन्वती,
सकलकलशतारमाराजितापापहाऽने-
कलाभास्थिता सद्विपक्षे मराले रेवार्यागमम् ॥ ४ ॥

*

अथ मूलप्रशस्तिः

[शार्दूलविक्रीडितम्]

४६ यस्याऽऽसन् गुरवोऽत्र जीतविजयप्राज्ञाः प्रकृष्टाशया,
भ्राजन्ते सनया नयादिविजयप्राज्ञाश्च विद्याप्रदाः।
प्रेम्णां यस्य च सद्म पद्मविजयो जातः सुधीः सोदरः,
सोऽयं न्यायविशारदः स तनुते विज्ञः स्तुतीरर्हताम् ॥ १ ॥

[आर्या]

४६ कृत्वा स्तुतिस्रजमिमां यदवापि शुभाशयान्मया कुशलम्।
तेन मम जन्मबीजे रागद्वेषौ विलीयेताम् ॥ २ ॥

# ऐन्द्रस्तुति-चतुर्विंशतिकाग्रन्थका हिन्दीभाषांतर

## मूल और अन्वयसहित

❀

**नोंध**-जैनसाहित्यमें 'स्तुतिचतुर्विंशतिका' नामका एक काव्य विशेष है, उसमें प्रत्येक तीर्थंकरको उद्देश करके चार चार स्तुतियोंकी रचना होती है, किन्तु चारों स्तुतियां अधिकृततीर्थंकरकी ही होती हैं ऐसा नहीं.

प्रथम स्तुति अधिकृततीर्थंकरकी, दूसरी एकसे अनेक-सर्वतीर्थंकरोंकी प्रार्थनारूप, तीसरी श्रुतज्ञानकी महत्तादर्शिका और अन्तिम अधिकृत तीर्थंकरके देव-देवीकी होती है ॥

### श्रीऋषभदेवस्तुतिः-१

ऐन्द्रव्रातनतो[1] यथार्थवचनः[2] प्रध्वस्तदोषो[3] जगत्[13]
संघो[19] गीतमहोदयः[2] शमवतां[4] राज्याधिकाराजितः[6] । — अधिकृततीर्थङ्करस्तुति.
आद्यस्[16]तीर्थकृतां[15] करोत्विह[21,18] गुणश्रेणीं[9] दधन्[10]नाभिभूः[17]
सद्योगी[11]तमहोदयः[12] शमं[20]ऽवतां[14] राज्योऽधिका[8] राजितः ॥ १ ॥

**अन्वय**-ऐन्द्र-व्रात-नत[1], यथार्थ-वचन, प्रध्वस्त-दोष, शमवतां राज्या गीत महोदय[5], राज्य-अधिकार-अजित[6], अधिका. गुण-श्रेणी[9] दधत्, सद्-योगी, इतमहा-उदय, जगत् अवताम् तीर्थकृताम् आद्य, नाभि भू, इह सद्य[19] श करोतु ॥१॥

**अर्थ** इन्द्र आदि देवगणसे नमस्कृत, यथार्थ ( प्रत्यक्षादिप्रमाणपूर्ण-सत्य ) उपदेश करनेवाले, राग आदि दोषोंको समूल विनाश करनेवाले, उपशमियों (योगियों) के समूह से गाये हुये ज्ञानातिशयवाले, राज्य के अधिकार ( भार ) से भी अपीडित, अधिक सुखप्रद या प्रतिदिन प्रवर्धनशील ज्ञानादि गुणश्रेणी को धारण करने वाले, चारित्रऋद्धि संपन्न-उत्तमयोगी ( संपन्न ), मोक्ष प्राप्त करनेवाले अतएव अधिक सुखसे सुशोभित, जगत् (-विशिष्ट भव्यलोक ) को उपदेशद्वारा रक्षा करनेवाले तीर्थङ्करों में आदिम ( प्रथम तीर्थङ्कर ), नाभिराजा के पुत्र ( भगवान ऋषभदेव ) इस संसार में शीघ्र कल्याण करे ॥

यहां भगवानके चार मूलातिशय कहे गये हैं; जैसे,-"ऐन्द्रव्रातनतः" इस विशेषणसे समस्त सुर-असुरसमूह के स्वामी द्वारा प्रणाम प्रतिपादनसे पूजातिशय (१)। "यथार्थवचन." इस विशेषणसे सर्वहितकारी सत्य उपदेशके द्वारा परम आप्तभाव कहने से 'वचनातिशय' (२)। "प्रध्वस्तदोष." इस विशेषणसे संसार के कारणरूप राग और द्वेष के उच्छेद के प्रतिपादनसे 'अपायापगमातिशय' (३) और "शमवतां राज्या गीतमहोदयः" इस विशेषणसे समस्त योगीजन के वर्णन करने के योग्य समस्त पदार्थ के ( प्रत्यक्ष ) करने में तत्पर केवलज्ञान के माहात्म्यके प्रतिपादन करनेसे 'ज्ञानातिशय' (४) दिखलाया गया है ॥ १ ॥

उद्भूताप्रतिरोधबोधकलितत्रैलोक्यभावव्रजा[1]-
स्तीर्थे[10] शास्तरसा[2] महोदितभयाऽकान्ताः सदा शापदम् । — अनेकतीर्थंकरस्तुति.
पुष्णन्तु[13] स्मरनिर्जयप्रसमरप्रौढप्रतापप्रथा-[5]
स्तीर्थेशास्तरसा[6] महोदितभया[7] कान्ता[4]: सदाशापदम् ॥ २ ॥

**अन्वय**-उद्भूत-अप्रतिरोध-बोध-कलित-त्रैलोक्य-भाव-व्रजा, शास्त-रसा, महा-उदित-भया कान्ता, स्मर-निर्जय-प्रसमर-प्रौढप्रताप-प्रथा, तरसा महस्-दित-भय-अकान्ता तीर्थेशा, सदा तीर्थे शापन्दं सद्-आशा-पदं पुष्णन्तु ॥ २ ॥

**अर्थ** ज्ञानके आवरण का विनाश होनेसे प्रकटीभूत और विना रुकावट के फैलनेवाला जो केवलज्ञान; उससे त्रिलोकस्थित पदार्थों को साक्षात्कार करनेवाले, लोककल्याणमें रस लेनेवाले या शान्तरसवाले, महा उदित कान्तिसे परम मनोहर, कामदेवके विजयसे फैलनेवाली महाप्रतापके ख्यातिवाले, शीघ्र तेजसे भयको नाश करनेवाले और दुःखोंको दूर करनेवाले तीर्थङ्कर, सदा तीर्थ ( चतुर्विध संघ ) में निदानादिदोषसे रहित पवित्र अनिन्द्य ऐसी मोक्षकी इच्छाके स्थानको पूर्ण करे ॥ २ ॥

जैनेन्द्रं[१७] स्मरतातिविस्तरनयं[५] निर्माय[४] मिथ्यादृशां[२]
सङ्गत्यागम[३]ऽभङ्गमानसहितं[६] हृद्यप्रभा[१] ! विश्रुतम्[७] ।
मिथ्यात्वं[१०] हरदूर्जितं[११] शुचिकथं[१२] पूर्णं[१५] पदानां[१३] मिथः　　श्रुतज्ञानकी स्तुति.
सङ्गत्या[१४] गमसङ्गमानसहितं[१६] हृद्य[११]ऽप्रमावि[८] श्रुतम्[१८] ॥ ३ ॥

**अन्वय**–भोः हृद्य-प्रभा ! मिथ्या-दृशां सङ्ग-त्यागं निर्माय, अति-विस्तर-नयम् अभङ्ग-मानस-हितम्, विश्रुतम्, अ-प्रमावि ऊर्जितं मिथ्यात्वं हरत्, शुचिकथम्, पदानां मिथः सङ्गत्या पूर्णम् गम-मान-सहित जैनेन्द्रं श्रुतं हृदि स्मरत ॥ ३ ॥

**अर्थ**　हे मनोहर कान्तिशाली सज्जनो ! आप लोग मिथ्यादृष्टियो के संबन्धको छोड़कर अतिविस्तृत नैगम आदि नयवाले, श्रद्धायुक्त चित्तवालोंका हितकारी, सुप्रसिद्ध, प्रभावहीन महामिथ्यात्व को नाश करनेवाले, पवित्र धार्मिक चरित्रवाले, पदोंकी परस्पर संगतिसे पूर्ण, गम ( सदृशपाठ ) भङ्ग ( विकल्प विशेष ) और प्रमाणों ( प्रत्यक्ष आदि तीनों ) से युक्त जिनेश्वर रचित श्रुत ( आचाराङ्गादि आगम-सिद्धान्त ) को हृदय में स्मरण करें ॥ ३ ॥

या[१] जाड्यं[४] हरते[५] स्मृता[२]ऽपि[३] भगवत्यम्भोरुहे[११] विस्फुरत्-
सौभाग्या[१५] श्रयतां[१६] हिता[१७] निदधती[१४] पुण्यप्रभाविक्रमौ[१२] ।　　देव-देवीकी स्तुति.
वाग्देवी[१९] वितनोतु[२३] वो[२०] जिनमतं[७] प्रोल्लासयन्ती[८] सदा[२१]-
ऽसौ[१८] भाग्याश्रयतां[९] हितानि[२२] दधती[१०] पुण्यप्रभावि[६] क्रमौ[१३] ॥ ४ ॥

**अन्वय**–या स्मृता अपि जाड्य हरते, पुण्य-प्रभावि जिन-मतं प्रोल्लासयन्ती, भाग्यस्य आश्रयता दधती, अम्भोरुहे पुण्य-प्रभा-विक्रमौ क्रमौ निदधती, विस्फुरत्-सौभाग्या, श्रयतां हिता असौ वाग्देवी व ( युष्माकम् ) सदा हितानि वितनोतु ॥ ४ ॥

**अर्थ**　जो स्मरणमात्रसे भी भक्तजनोंकी जडता ( अज्ञान ) को हरण कर लेती है, पुण्यके प्रकर्षको बढ़ानेवाले जिनशासनकी प्रभावना करती हुई, भाग्य के आश्रय ( स्थान ) को धारण करती हुई, पवित्र कान्ति और पराक्रमवाले अपने दोनों चरणों को कमलपर रखती हुई, विशिष्ट सौन्दर्यवाली, भक्तजनों का हित करनेवाली वह वाग्देवी–सरस्वती देवी तुम्हारे कल्याणोंकी वृद्धि नित्य करे ॥ ४ ॥

## श्रीअजितनाथस्तुतिः २

मुनिततिर[५]पि[६] यं[८] न[१०] रुद्धमोहा[४] शमजितमारमदं[७] भवन्दिता[३]ऽऽपत्[११] ।
भज[११] त[१७]मिह[२] जयन्तमा[१६]ऽऽशुमीशं[९] शम[१३]ऽजितमा[१५]ऽऽरम[१५]ऽदम्भवन्[१] ! दितापत्[१२] ॥ १ ॥

**अन्वय**–हे अ-दम्भवन् ! इह भ-वन्दिता, रुद्ध-मोहा, मुनि-ततिः अपि, शम-जित-मार-मदं यम् ईशं न आपत् ( साक्षाच्चक्रे ), दित-आपत् शम् आशुम्, आरं जयन्तं तम् अजितं त्वं भज.　॥ १ ॥

**अर्थ**　हे कपटरहित प्राणी ! नक्षत्र* नामक ज्योतिष्कदेवोसे वन्दित, मोहको वश करनेवाली योगियोंकी पंक्तिभी उपशमशान्तभावसे कंदर्प और अहङ्कारको जीतनेवाले जिस परम सामर्थ्यशाली जिनेश्वर भगवानको पा न सकी, उस अन्तरङ्ग शत्रुसमूहको जितनेवाले **अजितनाथ** भगवानको तुम इस संसारमें अखण्ड सुखकी प्राप्तिके लिये सेवन करो ॥ १ ॥

नियतमुपगता[६] भवे[७] लभन्ते[१०] परमतमोहर[१] ! यं[५] भया[२]ऽनिदानम्[१३] ।
हर[१७] रुचिर[३] ! ददद्[१५] जिनौघ[४] ! तं[११] द्राक्[१६] परमतमोहरयं[१२] भयानि[९] दानम्[१४] ॥ २ ॥

**अन्वय**–हे परमतमोहर ! भया रुचिर ! जिनौघ ! यम् उपगता भवे नियतं भयानि लभन्ते, अनिदानं दानं ददत् त्वं तं पर-मत-मोह-रयं द्राक् हर ॥ २ ॥

**अर्थ**　अनन्त भवोंके संचित पापकर्मोंको नाश करनेवाले, सुंदरतासे मनोज्ञ, हे जिनदेवोंके समुदाय ! आप निदान-रहित अभयादि दानको देते हो, इस लिये जिसको आश्रय करनेवाले प्राणी संसारमें निश्चितरूपसे भयको पाते हैं, उस शाक्यादिबुद्ध आदिका दर्शनरूप दृष्टिरागके वेगको आप शीघ्र दूर करो ॥ २ ॥

नयगहनम[३]ऽतिस्फुटानु योगं[४] जिनमतमुद्यतमानसा ! धुतारम्[५] ।
जननभयजिहासया[२] निरस्ताऽऽजि[६] नमत मुद्यतमानसाधुतारम्[७] ॥ ३ ॥

**अन्वय**–भो उद्यत-मानसा ! यूयम्, जननभय-जिहासया नय-गहनम्, अतिस्फुट-अनुयोगम्, धुत-आरम्, निरस्त-आजि, मुद्-यतमान-साधु-तारम् जिन-मतं नमत ॥ ३ ॥

* आकाशमें जो नक्षत्र दिखनेमें आते हैं वे नक्षत्रनामक देवके विमान हैं ।

**अर्थ** हे उद्यतमानसों! अर्थात् हे निरन्तर शुभ चारित्र-क्रियानुष्ठानपालन प्रणिधानपरायण अन्तःकरणवाले! आप लोक संसारके भयको हनन करनेकी इच्छा हो तो, नैगम आदि नयोंसे गम्भीर, सूत्रार्थ, फिर निर्युक्ति-टीका अर्थके संपूर्ण प्रतिपादनसे अत्यन्त स्पष्ट द्रव्यादि अनुयोगवाले, शत्रुसमूहको कंपित करनेवाले, संग्रामको दूर भगानेवाले और हर्षसे ध्यानादिकमें लगे हुए साधुओंको भयानक संसारसागरसे पार करानेवाले जैनागम-शास्त्रको प्रणाम करें ॥ ३ ॥

पविमपि दधतीह मानसीन्द्रैर्महितमदम्भवतां महाधिकारम् ।
दलयतु निवहे सुराङ्गनानामहितपदं भवतां महाधिकाऽरम् ॥ ४ ॥

**अन्वय** इन्द्रै महित पविम्, अपि (पुन') सुर-अङ्गनाना निवहे महा-अधिकार दधती, महै अधिका मानसी (देवी), इह अ-दम्भवतां भवताम्, अरम् अ-हित-मदं दलयतु ॥ ४ ॥

**अर्थ** इन्द्रोंसे पूजित वज्रको और सुरसुन्दरियोंके समूहमें महाआधिपत्यको धारण करनेवाली 'मानसीदेवी' इस संसारमें निष्कपट आप लोगोंके शत्रुओंके मदको दूर करे ॥ ४ ॥

## श्रीशम्भवजिनस्तुति २

शम्भव! सुखं ददत् त्वं, भाविनि भावारवारवारण! विश्वम् ।
वासवसमूहमहिताऽभाविनिभाऽरवाऽरवारवाऽरण! विश्वम् ॥ १ ॥

**अन्वय** हे अभावि-निभ! हे भावार-वार-वारण! हे वासव-समूह-महित! हे अरव-आरव! हे अ-रण! हे शम्भव! भाविनि (शुभ-प्रणिधाने पुंसि) सुखं ददत् त्व विश्व विश्वं (सकलं जगत्) अव ॥ १ ॥

**अर्थ** हे निष्कपट! हे भावार (सम्यक्त्वनाशक मिथ्यात्वरूप भावचक्रका अवयव विशेष) के समूह के निराकरण करनेवाले! हे इन्द्रसमूहसे पूजित! हे मूक को वाचाल बनाने वाले! हे संग्रामरहित! हे शम्भवजिनेश्वर! शुभध्यानवाले पुरुषको सुख देता हुआ तू समस्त संसार की रक्षा कर ॥ १ ॥

यद्धर्मः शं भविनां, सन्ततमुदितोऽदितोदारकरैः ।
स जयतु सार्वगणः शुचिसन्ततमुदितोऽदितोदितोऽदारकरैः ॥ २ ॥

**अन्वय** सन्ततम् उदित-उदित यद्-धर्म भविना शम् अदित (ददौ), शुचि-सन्तत-मुदितः, अदित-उदित', अ-दार-करः, उदार-कर. स सार्वगण. (तीर्थङ्करसमूह) जयतु ॥ २ ॥

**अर्थ** निरन्तर उदितोदित (उत्पत्तिकालसे लेकर अन्त तक रहनेवाला) जिसके धर्म (श्रुतधर्म) ने संसारियोंको सुख दिया, निर्मल और सतत हर्षित, अखण्डित वचनवाला, स्त्री और दण्ड से रहित, उदार (महादानी) हाथवाला वह तीर्थंकरों का समूह जयको पावे ॥ २ ॥

जैनी गीः सा जयताद्यया शमितामिता मिताक्षररुच्या ।
किं सन्तः समवतरन्नयया शमिताऽमितामिताऽक्षररुच्या ॥ ३ ॥

**अन्वय**- शमित-अमित-आमित-अक्षर-रुच्या, सम्-अवतरन्-नयया यया सन्त' शमितां न इता किम्? (प्राप्ता एवेत्यर्थः), मित-अक्षररुच्या सा जैनी गी. जयतात् ॥ ३ ॥

**अर्थ** अपरिमित रोग के शमनकारक मोक्ष की इच्छावाली, अनुयोग की अपृथक्त्वदशामें प्रत्यक्ष में अवतरित होनेवाले नैगम आदि नयवाली जिस वाणीने संतों (संविग्नगीतार्थों) को उपशमसंपन्न कर दिया, स्वल्प अक्षरों से मनोहर वह जिनसम्बन्धी वाणी (त्रिपदी), जय को पावे ॥ ३ ॥

दलयतु काञ्चनकान्तिर्जनतामहिता हिता हि ताराऽऽगमदा ।
इह वज्रशृङ्खला दुर्जनतामहिताहिताहितारागमदा ॥ ४ ॥

**अन्वय** इह काञ्चन-कान्ति, जनता-महिता, हिता, तार-आगम-दा, अहित-आहित-अ-राग-मदा, वज्रशृङ्खला हि दुर्जनता दलयतु ॥ ४ ॥

**अर्थ** इस संसार में सुवर्ण के समान कान्तिवाली, जनसमूहसे पूजित, हित करनेवाली, उज्ज्वल आगम ( श्रुत ) को देनेवाली, शत्रुओं में अप्रिय स्नेह और अहङ्कार के अभावको रखनेवाली 'वज्रशृङ्खलादेवी' निश्चय करके दुर्जनताको नाश करे ॥ ४ ॥

## श्रीअभिनन्दनजिनस्तुति ४

त्वमभिनन्दन ! दिव्यगिरा निराकृतसमाजनसाध्वसे ! हारिभिः ।
अहतधैर्य ! गुणैर्जय राजितः कृतसभाजन ! साध्वसहारिभिः ॥ १ ॥

**अन्वय** दिव्यगिरा हे निराकृत-सभा-जन साध्वस ! साधु-असह-अरिभि हे अ-हत-धैर्य ! हे कृत-सभाजन ! हे अभिनन्दन ! हारिभि गुणैः राजित त्वं जय ॥ १ ॥

**अर्थ** दिव्य ( सर्वभाषानुगामी योजनगामी सकल अतिशयसंपन्न ) भाषा के द्वारा हे सभास्थित जनों के इह लोकादिक भयको दूर भगानेवाले ! साधुओं ( उत्तमों ) को नहीं सहन करनेवाले शत्रुओं द्वारा हे अविनष्टधैर्य ! हे संतोष करनेवाले ! हे अभिनन्दन ! मनोहर गुणों से शोभित आप जयको प्राप्त करो ॥ १ ॥

भगवतां जननस्य जयन्निहा ऽऽशु भवतां तनुतां परमुत्करः ।
त्रिजगती-दुरितोपशमे पटुः शुभवतां तनुतां परमुत्करः ॥ २ ॥

**अन्वय** इह पर जयन्, त्रिजगती-दुरितो उपशमे पटु:, पर-मुत्-कर भगवताम् उत्कर:, शुभवता भवताम् आशु जननस्य तनुता तनुताम् ॥ २ ॥

**अर्थ** इस संसार में शत्रुको जीतता हुआ, तीनों लोकोंके पापोंके नाश करनेमें समर्थ, प्रकृष्ट हर्ष (मोक्षसुख) को करनेवाला तीर्थङ्करोंका समूह कल्याणवाले आपको शीघ्र संसार की न्यूनता करे अर्थात् नानायोनिजन्ममरणादिजन्य भवभ्रमणदुःखको दूर करे ॥ २ ॥

त्रिदिवमिच्छति यश्चतुरः स्फुरत्सुरसमूहमऽयं मतमऽर्हताम् ।
स्मरतु चारु ददत् पदमुच्चकैः सुरसमूहमयं मतमऽर्हताम् ॥ ३ ॥

**अन्वय** य चतुर स्फुरत्सुर-समूहं त्रिदिवम् इच्छति, अयम् (स: जनः), सु-रसम्, ऊह-मयम्, चारु, अर्हताम् मतं पदं ददत्, अर्हताम् ( भगवताम् ) मतं ( आगमम् ) उच्चकै: स्मरतु ॥ ३ ॥

**अर्थ** जो चतुर जन देवगणसे दीप्यमान स्वर्गको चाहता है, वह शान्तरसवाला, उत्कृष्ट विचारवाला, मनोहर, पूजनेवालोंको अभीष्टपद ( मोक्ष ) देनेवाला तीर्थङ्करोंके पद—आगम को उच्चस्वरसे स्मरण करे ॥ ३ ॥

धृतसकाण्डधनुर्धृतु तेजसा न रहिता सदया रुचिराजिता ।
मदहितानि परैरिह रोहिणी नरहिता सदया रुचिराऽजिता ॥ ४ ॥

**अन्वय** इह धृत-स-काण्ड-धनु:, तेजसा न रहिता, सत् अया, रुच्या राजिता, परैः अजिता, नर-हिता, स-दया, रुचिरा रोहिणी ( देवी ) मत्-अहितानि धुतु ॥ ४ ॥

**अर्थ** इस संसारमें बाणसहित धनुषको धारण करनेवाली, प्रतापसे युक्त, शुभ और सुन्दर भाग्यवाली कान्तिसे शोभित, शत्रुओंसे अपराजित, मनुष्योंको हितकरनेवाली, करुणासे युक्त, मनोहर या सत्सङ्गतिको देनेवाली 'रोहिणीदेवी' मेरे अहित—अप्रिय को काट देवे ॥ ४ ॥

## श्रीसुमतिजिनस्तुति ५

नम नमदमरसदमरससुमतिं सुमतिं सदसदरमुदारमुदा ।
जनिताजनितापदपदविभवं विभवं नर ! नरकान्तं कान्तम् ॥ १ ॥

**अन्वय** हे नर ! त्व नमत्-अमर-सन्दमरससुमतिं, सत्-अ-स-दरम्, जनित-अ-जनितापन्द-पद-विभवम्, वि-भवम्, नरकान्तम्, कान्तं सुमतिं ( सुमतिजिनं ) उदार-मुदा नम ॥ १ ॥

**अर्थ** हे मनुष्य! तुम देववृन्दसे वन्दित शमरससे युक्त शुभज्ञानवाला, सज्जनोंके बीचमें निर्भय, संसार तापनाशक पद-मोक्ष के विभव (सार) को करनेवाला, (संसाररहित, नरक को नाश करनेवाला), मनोभिराम सुमति नामक तीर्थंकर को प्रकृष्ट हर्ष से नमस्कार करो ॥ १ ॥

भवभवभयदोऽभयदावली[७] वलीयोदयोदयोऽमायाऽऽमा[३]।
दद्यादे[११]ऽर्याऽमितंमितशमा[४] शर्मादिष्टदिष्टवीजोऽवीजा[६] ॥ २ ॥

**अन्वय** भव-भव-भयदा, वलीयोदयोदया, अ-माया-आमा, इत-शमा, आदिष्ट-दिष्टवीजा, अ-बीजा अभयदावली (तीर्थङ्करश्रेणि) अद्य अमितं शम् दद्यात् ॥ २ ॥

**अर्थ** संसारमें उत्पन्न भय को खण्डन करनेवाली, प्रबल करुणासमुद्रवाली, माया कपट और आम (रोग) से रहित, शम को प्राप्त करनेवाली, प्रवृत्ति और निवृत्तिके लिये अदृष्टहेतु कर्म को आदेश करनेवाली अर्थात् धर्म और अधर्म के कारण को उपदेश करनेवाली, संसार के कारणरूप राग द्वेष के परिणाम से रहित तीर्थङ्करों की पंक्ति आज अपरिमित सुख को देवे ॥ २ ॥

दमदमेऽसुगमं[६] सुगमं[७] सदा[१३] सदानन्दनं[८] दयाविद्याविद्[२]।
परमंऽपरमंऽस्मर[१]! स्मर[१४] महामहा[३] धीरधी[४] रसमयं[११] समयम्[१२] ॥ ३ ॥

**अन्वय** हे अ-स्मर! दया-विद्या-विद्, महा-महा, धीर-धी त्वम्, दम-दम्, अ-सुगमम्, सुगमम्, सत्-आनन्दनम्, परम्, अ-परम्, रस-मयम् समय सदा स्मर ॥ ३ ॥

**अर्थ** हे कंदर्परहित! हे अहिंसा प्रतिपादक शास्त्रको जाननेवाले! महा तेजस्वी, धीरबुद्धिवाला तुम, इन्द्रियोंपर जय देनेवाला, असुगम (नयभङ्गादिगहनविचारसे कठिन), सुगम (सुन्दर सदृश पाठवाला), सज्जनों को हर्ष देनेवाला, सर्वश्रेष्ठ, शत्रुरहित, प्रकृष्ट शान्तरसवाला जैन सिद्धान्त को सदा स्मरण करो ॥ ३ ॥

काली[६] कालीर्ऽसरस भावीभावाय नयनसुखदोऽसुखदा[१]।
महिमहितनुता[३] तनुतादितादितामानमानरुच्या[४] रुच्या ॥ ४ ॥

**अन्वय** नयन-सुखदा, असुख-दा, महि-महित-नुता, इत-अदित-अमान मान-रुच्या (कृत्वा) रुच्या काली (देवी) अ-सरसभाव-अभावाय काली (सुखाली) तनुतात् ॥ ४ ॥

**अर्थ** नेत्रोंको सुख देनेवाली, दुःखको नाश करनेवाली, उत्सव करने वालोंसे पूजित और नमस्कृत, पाया हुआ अखण्डित और अपरिमित मान-पूजा में अभिलाषा करके मनोहर, 'काली' नामकी देवी दुःखोंको दूर करनेके लिये सुखकी श्रेणियों को बढावे ॥ ४ ॥

## श्रीपद्मप्रभजिनस्तुति ६

पद्मप्रभेश[५]! तव[७] यस्य[८] रुचिर्मते[८] सद्विश्वासमानसदयापर[१]! भावि[१६] तस्य[११]।
नोच्चैः[१०] पदं[१३] किमु[१४]? पचेलिमपुण्यसम्पद्[१२], विश्वासमान[२]! सदया[३]ऽपर[४]! भावितस्य[१] ॥ १ ॥

**अन्वय** हे सद्-विश्वास-मानस-दयापर! हे विश्व-असमान! हे सदय! हे अपर! हे पद्मप्रभेश! यस्य तव मते रुचि, भावितस्य तस्य पचेलिम-पुण्य-सम्पद् उच्चै पदम् किमु न भावि? अपि तु भाव्येवेत्यर्थ ॥ १ ॥

**अर्थ** शुभ विश्वास (जिनवचनपर दृढ श्रद्धा) युक्त अन्तःकरण वालोंपर करुणा करनेवाले! विश्वनिरुपम! सुन्दरभाग्यवान्! सर्वश्रेष्ठ! अथवा हे अजातशत्रु पद्मप्रभस्वामी! जिस व्यक्ति की तुम्हारे शासन में रुचि-श्रद्धा है, उस भव्यभाववाले व्यक्ति को अच्छी तरह परिपक्व पवित्र सम्पत्ति वाला (शाश्वत आनन्दरूप) ऊंचा पद-मोक्ष क्या नहीं होगा! अर्थात् अवश्य होगा ॥ १ ॥

मूर्तिः[८] शमस्य[६] दधती[५] किमु[३]? यां पदूनि[३] पुण्यानि[४] काचनं समासु[१] रराजं नव्या[७]।
सां स्तूयतां[२०] भगवतां[१७] विततिः[१८] स्वमया यां पुण्योऽनिकाचनं! समां सुरराजनव्यां[१४] ॥ २ ॥

**अन्वय** हे अनिकाचन ! या पट्टनि पुण्यानि दधती, शमस्य नव्या काचन मूर्तिः किमु ? सभासु रराज, त्वया स-भा, सुर-राज-नव्या, पुण्या सा भगवता वितति स्वभक्त्या स्तूयताम् ॥ २ ॥

**अर्थ** हे अनिकाचन ! ( मिथ्यात्वरहित ! ) जीव ! जो प्रौढ़ शुभकर्मों को विपाक के अनुभव से पुष्ट करती हुई, शान्तरस की नई किसी मूर्त्ति की तरह सभाओं में शोभित हुई, तुम उस पवित्र, प्रशस्तकान्ति वाली, देवेन्द्रों से स्तवन के योग्य, तीर्थङ्करोंकी श्रेणी को भक्ति से स्तुति करो ॥ २ ॥

लिप्सुः पदं परिगतैर्विनयेन जैनीं वाचं यमैः सततमञ्चतु रोचितार्थाम् ।
स्याद्वादमुद्रितकुतीर्थ्यनयावतारां वाचंयमैः सततमं चतुरोचितार्थाम् ॥ ३ ॥

**अन्वय** स-तर्त-मम् पदं लिप्सु ( जन ) यमैः परिगतैः वाचंयमैः रोचितार्थाम्, स्याद्वादमुद्रित-कुतीर्थ्य-नय-अवताराम् चतुरोचितार्थाम् जैनीं वाचं विनयेन सततम् अञ्चतु ॥ ३ ॥

**अर्थ** बाह्याभ्यन्तरलक्ष्मी से सम्पन्न, सुदेव[—अरिहंत]पद को प्राप्त करनेकी इच्छा वाला पुरुष, पंचमहाव्रतधारी मुनिवरों से सपूर्ण श्रद्धित अर्थवाली, यथास्थान में द्रव्यार्थिक और पर्यायार्थिक नयसे विवक्षित, सप्तभङ्ग्यात्मक वचनरूप स्याद्वाद से बौद्धादिक कुतीर्थियों के दुर्नयवादोंका उत्थान को रोकनेवाली, त्याज्य और ग्राह्यवस्तुमें अच्छे ज्ञानी जनोंको योग्य पुरुषार्थ करानेवाली, तीर्थंकर देवकी वाणीकी विनयपूर्वक निरन्तर पूजा करे ॥ ३ ॥

साहाय्यमत्र तनुषे शिवसाधने याऽपाता मुदा रसमयस्य निरन्तराये ! ।
गान्धारि ! वज्रमुसले जगतीं तवाऽस्याः पातामुदारसमयस्य निरन्तराये ! ॥ ४ ॥

**अन्वय** हे निर्-अन्तराये ! हे निरन्तर-आये ! हे गान्धारि ! या अपाता त्वम्, अत्र रस-मयस्य उदार-समयस्य शिव साधने मुदा, साहाय्यं तनुषे, अस्याः ( तस्या ) तव वज्र-मुसले जगतीं पाताम् ॥ ४ ॥

**अर्थ** विघ्नोंको दूर करनेवाली ! निरन्तर लाभ करनेवाली ! हे गान्धारि ! जो पतनरहित ( निःपाप ) तुम, इस संसारमें अत्युत्तम शान्तरसयुक्त उदार सिद्धान्तवाले जनके शिवसाधन ( मोक्षसंपादन ) में हर्षसे सहायता करती हो, उस तुम्हारे वज्र और मुसल पृथिवीको रक्षा करे ॥ ४ ॥

## श्रीसुपार्श्वजिनस्तुति ७

यदिह जिन ! सुपार्श्व ! त्वं निरस्ताकृतक्ष्माऽवनमद ! सुरवाऽधा हृद्यशोभाऽवतारम् ।
तत उदितमजस्रं कैर्बुधैर्गीयते नाऽवनमदसुर ! बाधाहृद् ! यशो भावतारम् ॥ १ ॥

**अन्वय** हे निरस्त-अकृत-क्ष्मा-अवन-मद ! हे सुख ! हे अव-नमत्-असुर ! हे बाधाहृत् ! हे हृद्यशोभ ! हे सुपार्श्वजिन ! त्वम् इह यत् अवतारम् अधाः, ततः उदितं यशः कैः बुधैः अजस्रं भावेन तारं न गीयते ? अपि तु सर्वैः गीयते ॥ १ ॥

**अर्थ** जाति आदि गर्वसे पृथ्वीवर्ती लोगोंके नहीं रक्षा करनेवालोंको दूर भगानेवाले ! सुन्दर ध्वनिवाले ! दनुजोंसे नमस्कार किये जानेवाले ! शारीरिक मानसिक आदि सकल दुःखको हरनेवाले ! मनोहर शोभावाले ! हे सुपार्श्व जिनेश्वर ! तुमने इस ससारमें जो जन्म लिया, उससे उत्पन्न यश किन पण्डितोंसे सतत भाव—श्रद्धा से खूब जोर से नहीं गाया जाता है ? अर्थात् सभी उच्चस्वरसे गाते हैं ॥ १ ॥

जगति शिवसुखं ये कान्तिभिर्भासयन्तोऽदुरितमदरतापध्यानकान्ताः सदाऽऽशाः ।
जिनवरवृषभास्ते नाशयन्तु प्रवृद्धं दुरितमदरतापध्यानकान्ताः सदाशाः ॥ २ ॥

**अन्वय** इत-मद-रत-अपध्यान-कान्ताः, कान्तिभि सदा आशाः भासयन्त ये जगति शिव-सुखम् अदु, अन्दर-ताप-ध्यान-कान्ताः सत्-आशाः ते जिनवरवृषभाः प्रवृद्धं दुरितं नाशयन्तु ॥ २ ॥

**अर्थ** जात्यादिमद-मैथुन-अपध्यान ( आर्त रौद्रध्यान ) और स्त्रीसे रहित, अपनी कान्तिओंसे सदा दिशाओंको शोभित करते हुए जिन जिनेश्वरोंने संसारमें शिव सुख ( मोक्ष सुख ) दिया, भय और उपसंतापरहित शुक्लाख्य ध्यान से मनोज्ञ, सज्जनों की आशा वे तीर्थंङ्कर भगवान् प्रवृद्ध ( बहुत जन्मों से इकठ्ठा किए हुए ) दुरितों ( पापों ) को नाश करें ॥ २ ॥

मुनिततिरपठद्[11] यं[10] वर्जयन्ती[6] हतोद्यत्तमसम[12]ऽहितदा[3]ऽत्रासा[4]ऽऽधिमा[5]ऽऽनन्दिता[8]ऽरम्[7] ।
समयमिह[21][2] भजा[23]ऽऽप्तेनो[18]क्तमुच्चै[19]र्दधानं[13][15] तम[20]ऽसम[1] ! हितदात्रा[17] साधिमानं[14] दितारम्[16] ॥ ३ ॥

**अन्वय** हे असम ! इह अहित-दा, अ-त्रासा, आधिं वर्जयन्ती, अरम् आनन्दिता मुनितति , यम् अपठत्, हत-उद्यत्-तमसम्, उच्चै. साधिमानं दधानम्, दित-आरम्, हितदात्रा आप्तेन उक्तं तं समयम् ( त्वम् ) भज ॥ ३ ॥

**अर्थ** हे निरुपम पुरुष ! तुम इस संसार में अहित (भावारि) को काटनेवाली, निर्भय, अत्यन्त संतुष्ट, मानसिक पीडाको त्याग करती हुई मुनियोंकी श्रेणीने जिस सिद्धान्त को पढा, उत्पन्न होते हुए पापोंको नाश करनेवाले, ऊँचे सुन्दर भावको धारणकरनेवाले, शत्रुसमूहको काटनेवाले, हितदायक आप्त (भगवान-जिनेश्वर) से कहे हुए उस सिद्धान्तको अङ्गीकार-स्वीकार करो ॥ ३ ॥

अवतु[13] करिणि[11] याता[12] साऽर्हतां[15] प्रौढभक्त्या[14] मुदित[16]मकलितापाया[10] महामानसी[14] माम्[18] ।
वहति[5] युधि[2] निहत्या[9]ऽनीकचक्रं[6] रिपूणा[8]मुदित[4]मकलितापा[3] या[1] महामानसीमा[7]म् ॥ ४ ॥

**अन्वय** या अ-कलि-तापा, युधि उदितं रिपूणाम् अनीक-चक्र निहत्य महा-मान-सीमा वहति, अ-कलित-अपाया, करणि याता सा महामानसी अर्हताम् प्रौढभक्त्या मुदितं माम् अवतु ॥ ४ ॥

**अर्थ** कलि-संग्राम के संतापसे रहित जो युद्धमें उत्पन्न शत्रुओंके सेनासमूहको जीतकर महामान-गर्व की सीमा (-पराकाष्ठा) को धारण करती, विघ्न से रहित, हाथीपर चढ़ी हुई वह 'महामानसी' देवी तीर्थङ्करों की तीव्र भक्तिसे हर्षित मुझको रक्षा करे ॥ ४ ॥

## श्रीचन्द्रप्रभजिनस्तुति ८

तुभ्यं[18] चन्द्रप्रभ[9] ! भवभयाद्[8] रक्षते[11] लेखलेखानन्तव्या[3]ऽपापमं[10]दमहते[2] ! सन्[1] ! नमो[19]ऽहासमाय[4] ! ।
श्रेयःश्रेणीं[14] भृशम[12]ऽसुमतां[13] तन्वते[15] ध्वस्तकामानन्तव्यापा[5]ऽपमद[6] ! महते[16] सन्नमोहा[7]ऽसमाय[17] ॥१॥

**अन्वय** हे सन् ! हे-लेख-लेखा-नन्तव्य ! हे अ-दम-हृते ! हे अ-हास-माय ! हे ध्वस्त-काम अनन्त-व्याप ! हे अप-मद ! हे सन्न-मोह ! हे चन्द्रप्रभ ! भव-भयात् अ-पापं (पुरुषं) रक्षते, भृशम् असुमता श्रेय श्रेणीं तन्वते, महते अ-समाय तुभ्यं नम. (अस्तु) ॥ १ ॥

**अर्थ** उत्तम ! हे देवश्रेणी प्रणमनीय ! इन्द्रियजेता ! हास कपट-रहित ! कामकी अनन्त आसक्ति को दूर भगानेवाले ! मद (अहङ्कार) रहित ! मोहअज्ञान को दूरकरनेवाले ! हे चन्द्रप्रभ ! संसारके भयसे पापरहित पुरुषको रक्षा करनेवाले, प्राणियोंकी कल्याणमालाको अत्यन्त बढानेवाले, महान् (नहीं उपकार करनेवालों को भी उपकारी होनेसे उत्तमोत्तम पुरुषके स्वभाववाले), उपमा रहित तुमको प्रणाम हो ॥ १ ॥

श्रेयो[13]दत्तां[14] चरणविलुठन्नम्रभूपालभूयो-मुक्तामाला[1]ऽसमदमहिता[2] बोधिदानाम[1]ऽहीना[3] ।
मोहापोहादुदितपरमज्योतिषां[9] कृत्स्नदोषैर्मुक्ता[4] माला[11]ऽसमदमहिता[5] वो[12]ऽधिदाना[6]ऽऽमहीना[7] ॥२॥

**अन्वय** चरण-विलुठत्-नम्रभूपाल-भूय.-मुक्ता-माला, असम-दम-हिता, अ-हीना, कृत्स्नदोषै मुक्ता, अ-समद-महिता, अधिदाना, आम-हीना, मोह-अपोहात् उदित-परम-ज्योतिषा बोधिदानां माला व (युष्मभ्यम्) श्रेय दत्ताम् ॥ २ ॥

**अर्थ** नमनशील राजाओंकी प्रचुरमुक्तामालाओंसे चुम्बित चरणवाली, निरुपम इन्द्रियविजेता पुरुषों को हितकरनेवाली, न्यूनतासे रहित, कृत्स्नदोषों (घातिक कर्मजनित अन्तरायप्रभृति समग्र जीवगुणके प्रतिपन्थी परिणामों) से मुक्त अहङ्कारहित जनोंसे पूजित, सर्वाधिक (साम्वत्सरिकादि वा अभयादि) दान देनेवाली, रोगरहित, मोहके अपोहसे अर्थात् मोहनीयकर्मके नाश होनेसे, उत्पन्न परमज्योति (केवल नामक ज्ञान) वाली बोधिदेनेवालों (तीर्थङ्करों) की पंक्ति तुम लोगोंको कल्याण देवे ॥ २ ॥

रेजन्नर्थैः[6] स्फुटनयमयैस्तीर्थनाथै[4]र्न चूलामालापीनैः[8] शमदम[2]वता[3]ऽसङ्गतोपायहृद्यैः[10] ।
सिद्धान्तो[15]ऽयं[14] भवतु[19] गदितैः[5] श्रेयसे[18] भक्तिभाजाम[16]ऽऽलापी[10] [17]नः शमदमवतां[1] स[11]ङ्गतोऽपायहृद्यः[13] ३

**अन्वय** शम-दम-वता, शमदम् अवता तीर्थनाथेन गदितः, रङ्गद्भङ्गः, स्फुट-नय-मय, चूला-माला-पीनः, असङ्गता-उपाय-हृद्यः, आलापी, सङ्गतः, यः अपाय-हृत्, अयं सिद्धान्तः भक्तिभाजां नः (अस्माकम्) श्रेयसे भवतु ॥ ३ ॥

**अर्थ** शम (क्षान्ति) और दम (पञ्चेन्द्रियजय) वाले, क्षान्तिदायी पुरुषको रक्षा करनेवाले तीर्थनाथ भगवान से कहा हुआ, रङ्गद्-भङ्ग (परस्पर अनुप्रवेशसे विलसित वचनविकल्प) वाला, प्रकट नैगमादिनयोंसे पूर्णतया युक्त, चूलिका की श्रेणीसे पुष्ट, निःसङ्गता के उपाय (ज्ञानदर्शन चारित्र के साम्राज्य) से मनोहर, आलाप (संबोधनपूर्वक बातचीत) करनेवाला, प्रसंग आदि सङ्गतिवाला, अपाय—विघ्न को हरण करनेवाला यह सिद्धान्त—जैनागम सेवापरायण हमलोगोंके कल्याणके लिये हो ॥ ३ ॥

सा त्वं वज्राङ्कुशि! जय मुनौ भूरिभक्तिः सुसिद्ध-प्राणायामेऽशुचि मतिमंऽतापाऽऽपदन्ताऽवलानाम्।
दत्से वज्राङ्कुशभृदनिशं दर्पहन्त्री प्रदत्त-प्राणा या मे शुचिमतिमता पापदन्तावलानाम् ॥ ४ ॥

**अन्वय** हे वज्राङ्कुशि! सुसिद्ध-प्राणायामे अ-शुचि मुनौ या भूरिभक्ति (त्वम्) मे (मह्य) मतिं दत्से, अ-तापा, आपत्-अन्ता, अवलानां प्रदत्त-प्राणा, अनिशं वज्र-अङ्कुश-भृत्, पाप-दन्तावलानां दर्पहन्त्री, शुचि-मति-मता सा त्वम् जय ॥ ४ ॥

**अर्थ** हे वज्राङ्कुशि! अतिशय सिद्धप्राणायामवाले शोकरहित मुनिमें अधिक भक्तिवाली जो तुम मुझे बुद्धि देती हो, तापसेरहित, आपत्तिको समाप्त करनेवाली, निर्बलोंको बल देनेवाली, सदा वज्र और अंकुश को धारण करनेवाली, पापरूपी हाथियों के दर्प-गर्व को नाश करनेवाली, निर्मल बुद्धिवालों की आराधना के लिये अभीष्ट वह तुम जयको पाओ ॥ ४ ॥

## श्रीसुविधिजिनस्तुति ९

यस्याऽतनोदं देवततिर्महं सुप्रभाऽवतारे शुचिमन्दरागे।
इहाऽस्तु भक्तिः सुविधौ दृढा मे प्रभावतारेऽशुचि मन्दरागे ॥ १ ॥

**अन्वय** यस्य अवतारे सु-प्रभा देव-ततिः शुचि-मन्दर-अगे महम् अतनोत्, प्रभाव-तारे, अ-शुचि, मन्द-रागे इह सुविधौ (सुविधि जिनेश्वरे) मे (मम) दृढा भक्ति अस्तु ॥ १ ॥

**अर्थ**—जिसके जन्मके समयमें सुन्दर कान्तिवाली देवश्रेणीने निर्मल मेरु पर्वत पर उत्सव किया, अत्यन्त उत्तम चित्ताध्यवसाय वालोंको संसारसे सागर पार करानेवाले, शोकसे रहित, इस जन्मकालमें मन्द रागवाले सुविधिनाथ जिनेश्वरमें मेरी दृढ भक्ति हो ॥ १ ॥

अभूर्न प्रकृष्टोपशमेषु येषु न मोहसेना जनितापदेभ्यः।
युष्मभ्यमाऽऽप्ताः! प्रथितोदयेभ्यो नमोऽहसेना! जनितापदेभ्यः ॥ २ ॥

**अन्वय** भोः अ-हस-इनाः! भो आप्ताः! प्रकृष्ट-उपशमेषु येषु मोह-सेना जनित-आपत् न अभूत्, प्रथित-उदयेभ्यः जनि-तापदेभ्यः एभ्यः युष्मभ्यम् नमः (अस्तु) ॥ २ ॥

**अर्थ** हे अहसों—केवलियों के स्वामी! हे आप्त (तीर्थङ्कर)! प्रकृष्ट उपशम क्षमाभाव (अतिशय तितिक्षापरिणाम) वाले जिन जिनेश्वरों में मोह-सेना (जगद् विभवका लुटेरा मोह महाराज का सैन्य) आपत्ति करनेवाली नहीं हुई, प्रसिद्ध उदय (अतिशय वा ज्ञान) वाले, संसारके तापको खण्डन करनेवाले उस तुमको (जिनेश्वरों को) नमस्कार हो ॥ २ ॥

वाणी रहस्यं दधती प्रदत्तमहोदयाऽवद्भिरनीतिहारि।
जीयाज्जिनेन्द्रैर्गदिता त्रिलोकीमहो! दयावद्भिरनीति हारि ॥ ३ ॥

**अन्वय** अहो! त्रिलोकीम् अवद्भिः दयावद्भिः जिनेन्द्रैः गदिता, अनीति-हारि अन्-ईति हारि रहस्य दधती प्रदत्त-महा-उदया वाणी जीयात् ॥ ३ ॥

**अर्थ** अहो! तीनों लोकोंकी रक्षा करनेवाले दयालु जिनेश्वरोंसे कही हुई, अनीति—नाशक, ईति (महामारी आदि-उपद्रव) नाशक, मनोहर सकलशास्त्र के गोपनीय अर्थ को धारण करती हुई, मोक्षको देनेवाली वाणी जयको पावे ॥ ३ ॥

ज्वालोज्ज्वलो[४] विद्रुमकान्तकान्तिः[५] करो[१०]ऽतुलाभं[१२] शमदम्भवल्याः[३] ।
ददन्नतानां[६] ज्वलनायुधे[१] ! नः[१४] करोतु लाभं[१३] शमदं[७] भवल्याः[२] ॥ ४ ॥

अन्वय हे ज्वलनायुधे ! अ-दम्भवल्याः भवल्या., ज्वाल-उत्-ज्वल विद्रुम-कान्त-कान्ति , नतानां शम-दं शम् ददत् करः नः (अस्माकम्) अतुल-आभ लाभं करोतु ॥ ४ ॥

अर्थ हे ज्वलनायुधे ! 'ज्वालामालिनी देवी' छल-कपटवाली आपका, ज्वालासे देदीप्यमान, प्रवालके समान कुछ लाल होनेसे सुन्दर कान्तिवाला नमन करनेवाले पुरुषोंको शान्तिदायक सुखको देता हुआ हाथ, हमलोगोंको निरुपम शोभायुक्त कल्याण की प्राप्ति करे ॥ ४ ॥

## श्रीशीतलजिनस्तुति १०

जयति[१५] शीत[१६]लतीर्थपतिर्जने[७] वसुमती[१३] तरणाय[४] महोदधौ[३] ।
ददति[८] यत्र[१] भवे[२] चरणग्रहे[६] वसुमती[१०] तरणाय[५] महो[११] दधौ[१२] ॥ १ ॥

अन्वय यत्र (जिनेश्वरे) भवे महोदधौ इत-रणाय तरणाय चरण-ग्रहे जने वसु ददति (सति) वसुमती महः दधौ, मती (स) शीतलतीर्थपतिः जयति ॥ १ ॥

अर्थ जिस जिनेश्वर के संसार महासागरसे संग्रामक्लेश रहित तरने के लिये महाव्रत ग्रहण करने के अवसर पर लोकमें द्रव्य देने पर पृथिवीने तेज धारण किया, कृतकृत्य होने से इष्टवान् वह शीतल नामका तीर्थंकर भगवान् सर्वोत्कृष्ट रूपसे जयवंता हैं ॥ १ ॥

वितर[११] शासनभक्तिमतां[४] जिनावलि[१] ! तमोहरणे[२] ! सुरसम्पदम्[७] ।
अधरयच्छिवनाम[९] महात्मनां[५] वलितमोहरणे[३] ! सुरसं[८] पदम्[१०] ॥ २ ॥

अन्वय हे जिन-आवलि ! हे तमस्-हरणे ! हे वलित-मोह-रणे ! (त्वं) शासन-भक्तिमतां महात्मनां सुर-सम्पदम् अधरयत् सु-रस शिव-नाम पद वितर ॥ २ ॥

अर्थ पापको हरण करनेवाली अज्ञान और संग्राम-संक्लेशको हटानेवाली हे जिनेश्वर देवोंकी श्रेणी ! आप जिनप्रवचनमें श्रद्धारसिकहृदयवालों महात्माओंको मोक्ष नामका पद दो ॥ २ ॥

भगवतो[११]ऽभ्युदितं[१२] विनमाऽऽगमं[१३] जन[१] ! यतः परमापदमाऽऽदरात् ।
इह निहत्य शिवं[१०] जगदुन्नतिं[३] जनयतः परमाऽऽप[११] दमादरात् ॥ ३ ॥

अन्वय हे जन ! दम-अदरात् उन्नतिं जनयत यत (जिनेश्वरात्) इह जगत् परम-आपद निहत्य पर शिवम् आप, त्वम् (तत.) भगवत. अभि-उदितम् आगमम् आदरात् विनम ॥ ३ ॥

अर्थ—हे जन ! इन्द्रियों पर विजय पा लेनेसे निर्भय, तीर्थोंकी प्रभावना को करता हुआ जिस जिनेश्वरसे इस ससारमें जगद्वर्ती लोकने परम शिव (मोक्ष) पाया, उस भगवान तीर्थङ्करसे अभ्युदित-साक्षात् अर्थरूपसे और परम्परासे सूत्ररूपसे उत्पन्न-आगम (सिद्धान्त) को विशेष रूपसे नमस्कार करो ॥ ३ ॥

स्तवरवैस्त्रिदशैस्तव सन्ततं[३] न परमऽच्छविमान विलासिता ।
न घनशस्त्रकलाऽप्यरिदारिणी[७] न परमच्छवि[१] ! मानवि[२] ! लासिता ॥ ४ ॥

अन्वय हे परमच्छवि ! हे मानवि ! सन्तत त्रिदशै स्तव-रवै (कृत्वा) तव अरि-दारिणी परम् (केवलम्) अच्छ-विमान-विलासिता न लासिता, किन्तु घन-शस्त्र-कला अपि न न लासिता (अपितु लासिता एव) ॥ ४ ॥

अर्थ उत्कृष्ट कान्तिवाली ! हे मानवि ! सदा देवोंने स्तुतिके ध्वनियों द्वारा तुम्हारी शत्रुओंको विदारण करनेवाली सिर्फ निर्मल-विमान के विलासकी शोभाको ही नहीं शोभित किया, किन्तु सघन शस्त्रकुशलताको भी शोभितकर दिया ॥४॥

## श्रीश्रेयांसजिनस्तुति ११

जिनवर ! भजन्[१३] श्रेयांस[६] ! त्वां व्रताम्बुद्दतोदयद्भवदवं ! नतोऽहं[१०] तापातङ्कमुक् ! महागम ! ।
गतभवभ्रान्तिश्रान्तिः फलेग्रहिरुल्लसद्भवदवनतो हन्ताऽपातं[११] कर्मुकमहागमं ! ॥ १ ॥

**अन्वय** हे व्रत-अम्बु-हत-उदयत्-भव-दव ! हे ताप-आतङ्क-मुक्त ! हे मह-आगम ! हे उक्त-महा-आगम ! हे जिनवर ! हे श्रेयांस ! उल्लसत्-भवत् अवनत. गत-भव-वन-भ्रान्ति श्रान्ति· ( सन् ) नत· अहम्, अ-पातं कं ( सुखं ) भजन् हन्त ! फलेग्रहि· (फलवान्) स्याम् ! ॥ १ ॥

**अर्थ** अहिंसादि पञ्चमहाव्रतरूपी जलसे बढ़े हुए संसाररूपी वनाग्नि को बुझादेनेवाले ! ताप और भय से रहित ! उत्सवों के आगमनवाले ! महा आगम ( समस्त शास्त्र का अतिक्रमण करने वाला सिद्धान्त ) को प्रतिपादन करने वाले ! हे श्रेयांस जिनवर ! [ केवलियों में श्रेष्ठ ] करुणातिशयसे शोभित आपकी रक्षासे संसाररूपी वनके भ्रमणजनित श्रमसे रहित होकर आपके चरणों मे नमा हुआ चिरस्थायी सुखको आश्रय करता हुआ मैं फलेग्रहि ( फलवान्– सफल ) होऊँ ॥ १ ॥

जिनसमुदयं विश्वाधारं हरन्तमिहाङ्गिनां भवमऽदरदं रुच्या कान्तं महासितमोहरम् ।
विनयमधिकं कारं कारं कुलादिविशिष्टता भवमदरदं रुच्याऽकान्तं महामि तमोहरम् ॥२॥

**अन्वय** अहम् विश्वआधारम्, इह अङ्गिना महा-अमित मोह-रम्, भवं हरन्तम्, अ-दरन्दम्, रुच्या कान्तम् कुल-आदि-विशिष्टता-भव-मद रदम्, अक-अन्तम्, तमोहरम् जिन-समुदयं अधिकं विनयं कारंकार रुच्या (श्रद्धया) महामि ॥ २ ॥

**अर्थ** मैं, ससारका आधाररूप इस जगत् में प्राणियोंके विवाह आदि उत्सवोंसे अपरिमित मोहनीय कर्मको ऐसे देनेवाले संसार को हरण करनेवाले, अभयको देनेवाले, कान्तिसे मनोहर, जाति आदि विशिष्टता से उत्पन्न अहङ्कारको दूरकरनेवाले, दुःखनाशक, पापापहारी जिनतीर्थङ्करसमुदायको श्रद्धा–भावसे पूजा करता हूं ॥ २ ॥

शुचिगमपदो भङ्गैःपूर्णो हरन् कुमतापहोऽनवरतमऽलोमावस्थामाऽऽश्रयन्नऽयशोऽमितः ।
जने ! तव मनो यायाच्छायामयः समयो गलन्नवरतमलो भावस्थामाश्रयं नयशोभितः ॥३॥

**अन्वय** हे अलोम-अवस्थाम् आश्रयन् ! हे जन ! शुचि-गम-पद , भङ्गै· पूर्ण , अमित अयश· हरन्, कुमत-अपहः, छाया-मय , गलन्-नव-रत-मल , नय-शोभित समय ,तव भाव-स्थाम-आश्रय मन· अनवरतम् यायात् ॥ ३ ॥

**अर्थ** संतोषदशाको आश्रय करनेवाले ! हे जन ! पवित्र गमपदों (सदश पाठपदों ) से युक्त, भङ्गों ( विकल्प विशेषो ) से भरा हुआ, सब तरहसे अकीर्तिको दूर ले जाता हुआ, कुमत (कुत्सित बौद्धादि सिद्धान्त) को नाश करनेवाला, विशिष्ट शोभावाला, नवीन मैथुनरूपमलको अर्थात् पुंवदेको नाश करनेवाला, नैगम आदि नयोंसे शोभित समय-शास्त्र तुम्हारे श्रद्धाबल के मन्दिरसम मन में सदा गमन करे ॥ ३ ॥

सुकृतपटुतां विघ्नोच्छित्त्यां तवारिहतिक्षमाऽपविफलकरा द्युत्याऽगेहाऽऽधनाधनराजिता ।
वितरतु महाकाली घण्टाक्षसन्ततिविस्फुरत्पविफलकरा द्युत्यागेहा घनाघनराजिता ॥ ४ ॥

**अन्वय** हे अ-गेह ! अरि-दति-क्षमा, अप-विफल-करा, द्युत्या आ-घनाघन-राजिता, घण्टा-अक्षसन्तति-विस्फुरत्-पवि-फल-करा, द्यु-त्याग-ईहा, घन-अघ-नर-अजिता महाकाली विघ्न-उच्छित्या तव सुकृत-पटुता वितरतु ॥ ४ ॥

**अर्थ** हे गृहविहीनप्राणी ! शत्रुओको नाश करनेमें समर्थ, निष्फल कर्मसे रहित होती हुई सुखको देनेवाली, अपनी काली कान्ति से चारो तरफ मेघके समान शोभनेवाली, घण्टा, अक्षसूत्र, शोभते हुए वज्र और फल को धारण करनेवाली, परमधर्माङ्गीभूत मनुष्यजन्म की प्राप्ति के इच्छुक होनेसे स्वर्गलोक को छोडदेने की इच्छावाली, अधिक पापवालों पुरुषों को नहीं प्रत्यक्ष होनेवाली 'महाकाली' नामकी देवी, विघ्नोंको विनाशकर तुमको पुण्यका सामर्थ्य देवे ॥ ४ ॥

## श्रीवासुपूज्यजिनस्तुति १२

पद्मोल्लासे पटुत्वं दधदधिकरुचिर्वासुपूज्योऽर्कतुल्यो
लोके सद्धीरपाताशमरुचिरपवित्रासहारिप्रभोऽव ।
लुम्पन् स्वैर्गोविलासैर्जगति घनतमो दुर्नयध्वस्ततत्वा-
लोकं सद्धीर ! पाताशमरुचिरपवित्रास ! हारिप्रभाव ! ॥ १ ॥

**अन्वय** हे अ-रुचिर-पवित्र असह-अरि-प्रभ! हे सद्-धीर! हे अप-वित्रास! हे हारि-प्रभाव! हे वासुपूज्य! पद्म-उल्लासे पटुत्वं दधत्, अधिक रुचि', सत्-धी, स्वैः गो-विलासैः जगति घन-तम लुम्पन्, शम-रुचि, अर्क-तुल्यः पाता (त्वम्), अ-पात-आशम् (भव-भीरुं) दुर्नय-ध्वस्त-तत्त्व- आलोकम् लोकं (भव्य-प्राणिनम्) अव ॥ १ ॥

**अर्थ** हे स्वमतानुगामी पवित्र अन्तःकरणवाले श्रमणोंको नहीं सहन करनेवालों शत्रुओं (बौद्धादिकों) की प्रभाको दूरकरनेवाले! हे सज्जनोंके मध्यमें धीर! हे निर्भय! हे मनोहर प्रभाववाले! हे वासुपूज्य! पद्मा (लक्ष्मी और कमल) के विकास में पटुता को धारण करता हुआ, जगत् में सर्वाधिकरुचि (सम्यग्दृष्टि और कान्ति) वाला, सुन्दर बुद्धिवाला, अपनी गो (वाणी और किरण) के विलासोंसे संसारमें घन अज्ञान और घन अन्धकार को दूर ले जाता हुआ, शान्तरस में रुचिवाला, सूर्यके समान रक्षक तुम, संसार में गिरने की इच्छा से रहित (भव भीरु), दुर्नयग्रस्त (बौद्धादिकों से ग्रस्त-घनान्धकारसे नष्ट) तत्त्वालोक (परमार्थ प्रकाश) वाले जनको रक्षा करो ॥ १ ॥

लोकानां पूरयन्ती सपदि भगवतां जन्मसंज्ञे गतिर्मे
हृद्यां राजीवनेऽत्राऽभवतुर्दऽमरसार्थानताऽपातमोहां।
साक्षात् किं कल्पवल्लिर्विबुधपरिगता क्रोधमानार्त्तिमाया-
हृद्या राजीवनेत्रा भवतु दमरसाऽर्थानतापा तमोहा ॥ २ ॥

**अन्वय** या क्रोध-मान-अर्त्ति-माया-हृत् राजीव-नेत्रा, दम-रसा, अ-तापा, तमस्-हा, हृद्या, अ-भव तुत्, अमर-सार्थ-आनता, अ-पात-मोहा, लोकानां सपदि अर्थान् पूरयन्ती, विबुध-परिगता साक्षात् कल्पवल्लि किम्? सा भगवता राजी अत्र जन्म-संज्ञे वने मे (मम) गतिः भवतु ॥ २ ॥

**अर्थ** क्रोध, मान, अर्त्ति और कपट को हरणकरनेवाली, कमल के समान नेत्रवाली, इन्द्रियों के विजयमें दृढ़ चित्तादरवाली, तापसे रहित, पापो को त्यागकरनेवाली, मनोहर, संसारकी पीडासे रहित, सुरसमूह से नमस्कृत, संसाररूपी खाई में पतनसे और अज्ञान से रहित लोगो के मनोवाञ्छित वस्तुओंको तत्काल पूर्ण करती हुई, साक्षात् कल्पलता के समान वह भगवानों (तीर्थङ्करो) की श्रेणी इस प्रत्यक्ष जन्म नामक वन में मेरा आधार हो ॥ २ ॥

उत्तुङ्गस्त्वय्यभङ्गः प्रथयति सुकृतं चारुपीयूषपीना-
ऽऽस्वादे शस्तादराऽतिक्षतशुचिसदनेकान्त! सिद्धान्तरागः।
रङ्गद्भङ्गप्रसङ्गोल्लसदसमनये निर्मितानङ्गभङ्ग-
स्वादेश! स्तादऽरातिक्षतशुचिसदने कान्तसिद्धान्त! रागैः ॥ ३ ॥

**अन्वय** हे शस्त-आदर! हे सत्-अनेकान्त! हे निर्मित-अनङ्ग-भङ्ग-सु-आदेश! हे कान्त-सिद्धान्त! चारु-पीयूष-पीन-आस्वादे, अति क्षत शुचि, रङ्गत्-भङ्ग-प्रसङ्ग-उल्लसत्-असम-नये, अराति-क्षत शुचि-सदने, सिद्धान्तर-आगस्-सुकृतं प्रथयति (सति) त्वयि, (मम) अभङ्ग राग उत्तुङ्ग स्यात् ॥ ३ ॥

**अर्थ** प्रशस्त आदरवाले! परतर्कसे अप्रतिहत सुन्दर स्याद्वादनामक सिद्धान्तवाले! कंदर्पके दर्पको प्रतिघात करनेवाले! सुन्दर श्रुतोपदेशकरनेवाले! हे मनोहर सिद्धान्त (आगम) वाले!, सुन्दर अमृत के समान पूर्णआस्वादवाले, अतिशय-रूपसे शोकको नाशकरनेवाले, परस्पर अनुप्रवेश करते हुए विकल्पविशेषों के प्रसङ्ग (एकार्थ प्रत्यासत्ति) से शोभित (यथास्थानमें आगिरनेवाले) निरुपम नैगमआदिनयवाले, शत्रुनाशकारक भव्यके सदनस्वरूप, अपराधनाशक पुण्यको विस्तारकरनेवाले तुममें, (शास्त्रमें) मेरा अक्षयप्रेम प्रतिक्षण वढनेवाला हो ॥ ३ ॥

वाग्देवि! प्रीणयन्ती पटुविविधनयोन्नीतशास्त्रार्थनिष्ठा-
शङ्कान्ते! देहि नव्येरितरणकुशले! सुभ्रुवा देवि! शिष्टम्।
श्रद्धाभाजां प्रसादं सुमतिकुमुदिनीचन्द्रकान्ते! प्रपूर्णा-
ऽऽशां कान्ते! देहिनव्येऽरितरणकुशले! सुभ्रु! वादे विशिष्टम् ॥ ४ ॥

**अन्वय** हे पटु-विविध-नय-उन्नीत-शास्त्रार्थ निष्ठा-शङ्का-अन्ते! हे नव्य-ईरित-रण-कुशले! हे सुमति-कुमुदिनी-चन्द्रकान्ते! हे कान्ते! हे देहि-नव्ये! हे अरि-तरण-कुशले! हे सुभ्रु! हे देवि! हे वाग्देवि! शिष्ट प्रीणयन्ती (त्वम्) सु-भ्रुवा (कृत्वा) श्रद्धाभाजा वादे प्रपूर्ण-आशाम् विशिष्टं प्रसादम् (वरम्) देहि ॥ ४ ॥

**अर्थ** दूषितनयों को दूर करने में समर्थ विचित्र अर्थ विषयवाले नैगम आदि नयों से शास्त्र के विषयों की मर्यादासे संदेह को नाशकरनेवाली ! नवीन प्रेरित सग्राम में कल्याण करनेवाली, उत्तम बुद्धिरूप कुमुदिनी को विकसित करने में चन्द्र किरण के समान, मनोज्ञ, प्राणियों से स्तवन के योग्य, शत्रुओं के विजयमें कुशल, सुन्दर भौंवाली, पूज्य हे सरस्वति देवि ! सद् आचरणवाले पुरुष को संतुष्ट करती हुई तुम अपना उत्तम भृकुटि विलास से जिनमतभक्तिशाली पुरुषों के वाद विवादके विषय में आशाओं से परिपूर्ण विशिष्ट वरदान दो ॥ ४ ॥

## श्रीविमलजिनस्तुतिः १३

नमो[16] हतरणायतेऽ[3]समदमाय[11] पुण्याशया[2]
समाजित[5]! विभा[3]सुरैर्विमल[10]! विश्व[17]मारक्षते[14]।
न[6] मोहतरणाय[13] ते[8] शमदमाय[7]! पुण्याशया-
ऽसमाजितविभा[8]सुरैर्विमल[4]विश्वमारक्षते[1]! ॥ १ ॥

**अन्वय** हे हत-रण-आयते ! पुण्य-आशया वि-भासुरैः असुरैः हे समाजित ! हे न स-मदमाय ! हे पुण्य-आशय-अ-सभा-जित विभ ! हे वि-मल-विश्व-मार-क्षते ! हे विमल ! असम-दमाय मोह-तरणाय विश्वम् आ-रक्षते ते ( तुभ्यम् ) नम ( अस्तु ) ॥ १ ॥

**अर्थ** प्रशम पवित्र होने से आयति=उत्तरकालिक-सग्राम को नष्ट करनेवाले, पुण्य की आशा से देदीप्यमान असुरों से सेवित, अहङ्कार और परवञ्चनासे रहित, सभासे अजितकान्तिवाले और पवित्र अध्यवसायवाले, मल ( वध्यमान कर्म-ऐर्यापथ ) और संपूर्ण कामजनित गुणपरिहाणि से रहित, हे विमल जिनेश्वर ! निरुपम इन्द्रियजयवाले, मोहनीय नामक कर्मको जय करने वाले, संसार को सभी तरहसे रक्षा करने वाले, तुमको नमस्कार हो ॥ १ ॥

महाय[18] तरसा[16]ऽहिता[4]ऽजगतिबोधिदाना[3]महो[1]!
दया[15] भवतुदां[2] तता[5]ऽसकलहा[6]ऽसमाना[8]ऽऽमया[7]।
महायतरसाहिता[10] जगति [20]वोऽधिदाना[11] महो-
दया[12] भवतु[19] दान्तताऽसकलहासमाना[13]ऽभया[17] ॥ २ ॥

**अन्वय** अहो ! भव-तुदाम् अज-गति-बोधिदानां हिता, तता, अ-स-कलहा, आमया ( कृत्वा ) अ-समाना, जगति महा-आयत-रस-आहिता, अधिदाना, महा-उदया, दान्तता—अ-सकल हास-माना, अ-भया दया, तरसा वः ( युष्माकं ) महाय भवतु ॥ २ ॥

**अर्थ** अहो ! संसारका परिभ्रमणको नष्टकरनेवालों सिद्धो के मध्यमें जानेवालों, बोधिदेनेवालों तीर्थङ्करों की, हितकारिणी, विस्तीर्ण, कलहसे रहित, कान्ति शोभासे अनुपम, महान शान्तरससे पूर्ण, संसार में सबसे अधिक देनेवाली, महान उदयवाली, इन्द्रियदमन के कारण से समस्त हास और मानसे रहित, भयरहित ऐसी जो दया-करुणा वह शीघ्र तुम्हारे उत्सव आनंद के लिये हो ।

क्रियाद[10]ऽरं[9]मेऽनन्तरागततया[2] चितं[3] वैभवं[17] मतं[16] समुदितं[4] सदा[1] शमवता[7]ऽभवेनोदितम्[5]।
क्रियादरं[12]मेऽनन्तरागततयाचितं[13] वैभवं[14] मतं[15] समुदितं सदाशमेऽवता[6] [10]भवेऽनोदितम्[11] ॥ ३ ॥

**अन्वय** सदा अनन्तर-आगततया चितम्, समुदितम्, सत्-आशम् अवता शमवता अभवेन उदितम्, भवे अ-नोदितम्, क्रिया-आदरम्, अनन्त-राग—तत-याचितम्, वैभवम् ( विभु-सम्बन्धि—आर्हतम् ) मतं ( शासनम् ) मे वैभवम् अरम् क्रियात् ॥

**अर्थ** सर्वदा अविच्छिन्न शिष्य प्रशिष्यादि परम्परा से प्राप्त होने के कारण पुष्ट, हर्षयुक्त, समीचीन इच्छावालों ( मुमुक्षुजनों ) को उपदेश का दान से रक्षा करते हुए उपशमयुक्त अपुनर्जन्मा तीर्थङ्करों के द्वारा कहा हुआ, ससार में नहीं प्रेरणा करनेवाला, क्रिया ( प्रेक्षा उत्प्रेक्षा आदिक आभ्यन्तर धर्मसाधन रूप दृढ योग के व्यापार ) में आदर ( मुख्य रूप से उपदेशमें तत्परता ) वाला, अपरिमित आदर से विस्तीर्ण जनों के द्वारा प्रार्थित, विभु सबन्धी ( आर्हत ) शासन , अभीष्ट ऐश्वर्यसमूह को अत्यन्त करे ॥ ३ ॥

प्रभा[1] वितरतादरं[15] सुरभियाऽतता[3] रोहिणी[4] हिताशुगुरु[12] [13]चाऽपराजितकराशमारोचिता।
प्रभावितरतादरं[10] सुरभियाततारोहिणी[5] हिताऽऽशु[16] गुरुचापराजितकरा[7] शमाऽऽरोचिता[14] ॥ ४ ॥

अन्वय प्र-भा, सुरभिया अ-तता, अ पराजित कर-आश-मार-रुचिता, सुरभि-यात-तार रुहिणी, हिता, गुरु-चाप-राजित-करा, आ-रोचिता रोहिणी, प्रभावितर-ता-आदरम्, ईहित-अ-शुक् उरु च शम् अरम् आशु वितरताम् ॥ ४ ॥

**अर्थ** प्रकृष्ट कान्तिवाली, देवो के भयसे अविस्तीर्ण, अपराजित कान्तिवाले (निजप्रिय) में अभिनिवेश (आशा) करनेवाले कंदर्प के समान आकारवाली, सुरभि कामधेनु गाय के वाहनवाली, उच्च विचारवाली, हित करनेवाली, विशाल धनुष से शोभित हाथवाली, सभी प्रकार से श्रद्धा करनेवाली 'रोहिणी' देवी अत्यन्त प्रभाववालों से आदरवाला, वाञ्छित करके शोकरहित अर्थात् इच्छितपूर्ति से अप्राप्तिशोक को गलानेवाला और विस्तीर्ण सुखको अत्यन्त शीघ्र देवे ॥ ४ ॥

## श्रीअनन्तजिनस्तुतिः १४

कलितमोदम्[1]ऽनन्तरसाश्रये[2] शिवपदे[3] स्थितम्[4]ऽस्तभवापदम्[5]।
त्रिदशपूज्य[6]मनन्तजितं[8] जिनं[9] कलितमोदमनं[7] तरसा[10]ऽऽश्रये[11] ॥ १ ॥

**अन्वय** अहम् कलित-मोदम्, अनन्त-रस-आश्रये शिव-पदे स्थितम्, अस्त-भव-आपदम्, त्रिदश-पूज्यम् कलि-तमः दमनम्, अनन्त जित जिनं तरसा आश्रये ॥ १ ॥

**अर्थ** मैं, आनन्द को धारण करनेवाले, अन्तरहित शान्ति नामक रस के गृहस्वरूप मोक्षस्थानमें रहनेवाले, संसार की विपत्ति को नष्ट करनेवाले, देवो के पूजनीय, संग्राम और पापको नाश करनेवाले अनन्तजित नामक जिनेश्वरको शीघ्र सेवूं ॥ १ ॥

जिनवरा[2] गततापदरोचितां[4] प्रददतां[10] पदवीं[9] मम[3] शाश्वतीम्[8]।
दुरितहृद्वचना[1] न[6] कदाचना[5]ऽऽजिनवरागततापदरोचिताम्[7] ॥ २ ॥

**अन्वय** दुरित-हृत्-वचना जिनवरा मम गत-ताप-दर-रुचिताम्, कदाचन न आजि-नव-राग-तत-आपत्-अ-रोचिता शाश्वतीं पदवीं प्रददताम् ॥ २ ॥

- **अर्थ** पापापहारी वचनवाले तीर्थंकर मुझे आध्यात्मिक ताप और इहलौकिक भय से रहित अनुरूप, कभी भी संग्राम और नवराग से विस्तीर्ण आपत्ति के द्वारा अरुचिकर नहीं होनेवाली शाश्वत पदवी–मोक्षमार्ग को देवें ॥ २ ॥

सुरसमानसदक्षरहस्य[1]! ते[9] मधुरिमा[10]ऽऽगम[3]! [10]सोऽस्तु[13] शिवाय[12] नः[11]।
जगति[5] येन[4] सुधाऽपि[6] घनप्रभासुरसमानसदक्षर[2]! हस्यते[8] ॥ ३ ॥

**अन्वय** हे सु-रस-मानस-दक्ष-रहस्य! हे घन-प्र-भासुर-स-मान-सद्-अक्षर! हे आगम! येन जगति सुधा अपि हस्यते, ते (तव) स मधुरिमा न (अस्माकम्) शिवाय अस्तु ॥ ३ ॥

**अर्थ** सुन्दर रससे ओतप्रोत चित्तवाले निपुणों–गणधरों के रहस्य! (उपनिषद्भूत)! अविरल देदीप्यमान मानसहित उत्तम अक्षरवाले! हे आगम! जो संसार में अमृत को भी हँसी उड़ाता है, तुम्हारी वह मधुरिमा–आस्वादन के द्वारा जानने लायक माधुर्यगुण, हमलोगों के मोक्षके लिये हो ॥ ३ ॥

सदसिरेऽक्षतिभा[10] सुरवा[11] जिनं[7] जगादिता[2] फलकेषुधनुर्धरा[3]।
जगति[15] येयमिह[12][13] प्रणताऽच्युता सदसि[14] रक्षति[6] भासुरवाजिनम्[1] ॥ ४ ॥

**अन्वय** भासुर-वाजिनम् इता, फलक-इषु-धनु-धरा या जगद् रक्षति, जिनं प्रणता, सत्–असि, अ-क्षति-भा, सु-रवा इयम् (सा) अच्युता इह (जगति) सदसि (पर्षदि) जयति ॥ ४ ॥

**अर्थ**—अत्यन्त सुन्दर घोडापर बैठी हुई हाथोंमें फलक[–ढाल] और तलवार को, तथा बाण और धनुषको धारण करनेवाली जो (देवी) संसारको रक्षा करती है, जिनेश्वर को वन्दना करनेवाली, अदूषित कान्तिवाली, सुन्दर शब्दवाली वह 'अच्युता' नामकी देवी इस संसारमें सभामें जयको पा रही है ॥ ४ ॥

## श्रीधर्मजिनस्तुतिः १५

श्रीधर्म[२]! तव[६] कर्मद्रु-वारणस्य[४] सदायते! ॥
स्तवं[७] कर्तुं[८] कृतद्वेषि-वारणस्य[५] सदा[३] यते[१] ॥ १ ॥

**अन्वय** हे सत्-आयते! हे श्रीधर्म! अहम् सदा कर्म-द्रु-वारणस्य कृतद्वेषि-वारणस्य तव स्तवं कर्तुं यते ॥ १ ॥

**अर्थ** हे शुभ आयति ( उत्तरकाल, भावि काल ) वाले! हे श्रीधर्मनाथ जिनेश्वर! मैं सदा कर्मरूप वृक्ष के उन्मूलन करनेमें हाथी के समान, बाह्य और आभ्यन्तर के शत्रुओं को निवारण करनेवाले तुमको स्तुति करने के लिये उद्यत होऊँ ॥ १ ॥

गिरा[३] त्रिजगदुद्धारं[४] भाऽसमाना[१] ततान[५] या।
श्रिया[६] जीयाज्जिनाली[१०] सा[८] भासमानाऽततानया ॥ २ ॥

**अन्वय** भया अ-समाना या गिरा ( कृत्वा ) त्रि-जगत्-उद्धारम् ततान, श्रिया भासमाना अ-तत-अनया सा जिन-आली जीयात् ॥ २ ॥

**अर्थ** अपनी कान्ति से निरुपमान जिस जिनेश्वर की श्रेणीने वाणी के द्वारा तीनों जगत् का उद्धार किया, चौतीस अतिशय और अष्टमहाप्रातिहार्यादि लक्ष्मी से शोभती हुई, अन्याय नहीं करनेवाली अर्थात् न्याय करनेवाली वह जिनेश्वर की श्रेणी जयको पावे ॥ २ ॥

वचः[६] पापहरं[१] दत्त-सातं[२] केवलिनोदितम्[५]।
भवे[९] त्राणाय[१०] गहने[८] सातङ्केऽवलिनोदितम्[३] ॥ ३ ॥

**अन्वय** पाप-हरम्, दत्त-सातम्, अ-वलिनोदितम्, केवलिना उदितं वचः, स-आतङ्के गहने ( निबिडे ) भवे ( अस्माकम् ) त्राणाय अस्तु ॥ ३ ॥

**अर्थ** पापनाशक, सुखदायक, नैयायिक आदि अन्य तन्त्र-शास्त्रकारों के द्वारा अप्रेरित, तीर्थंकर से कहा हुआ वचन, सातङ्क (जन्म जरा मरणादिभय से युक्त ) गहन भव-चतुर्गतिरूपसंसार में पतन को रोकने के लिये हो ॥ ३ ॥

दधुः[१३] प्रसादाः[१२] प्रज्ञप्त्याः[१०] शक्तिमे[११]ऽस्त्याजितादराः।
तस्या[९] यया[१] द्विषां[३] सर्वे[४] शक्तिमत्या[२] जिता[६] दराः[५] ॥ ४ ॥

**अन्वय** यया शक्तिमत्या द्विषा सर्वे दरा जिता, तस्या प्रज्ञप्त्या अ-त्याजित-आदरा प्रसादा शक्तिं दधु ॥ ४ ॥

**अर्थ** जिस शक्ति रूप शस्त्रविशेष या सामर्थ्यको धारण करनेवाली देवी ने शत्रुओं के समस्त भय दूर कर दिये, उस 'प्रज्ञप्ति' देवी के आदरयुक्त प्रसाद-वरदान, हम लोगों को सामर्थ्य देवें ॥ ४ ॥

## श्रीशान्तिजिनस्तुतिः १६

अस्यामूद्[२१] व्रतघाति नीतिरुचिरं[१५] यच्छ्रेयसे[९] सेवना-
दक्षोदं[१०] भरतस्य वैभवमयं[१२] साराजितं तन्वतः।
लिप्सो[७]! शान्तिजिनस्य शासनरुचिं[२६] सौख्यं[३] जयद् ब्रह्म भोः[१]!
दक्षो[२३]ऽदम्भरतस्य वै भवमयं[२] साराजितं[५] तन्वऽतः[२२] ॥ १ ॥

**अन्वय** भो भव-मयं सौख्यं जयत् सार-आजितम् ब्रह्म लिप्सो! यत् यस्मात् कारणात्, श्रेयसे अ-क्षोदम् सार-अजितम् अयम् ( इष्टदैवम् ) तन्वत. अस्य ( शान्ते ) अति-रुचिर भरतस्य वैभवं सेवनात् हेतो व्रतघाति न अभूत्, अत-कारणात्, दक्ष त्वम् अदम्भरतस्य शान्तिजिनस्य शासन-रुचिम् तनु ( विधेहि ) ॥ १ ॥

**अर्थ** सांसारिक इन्द्रियजन्य सौख्य को जीतते हुए चक्रवर्ती आदि के लक्ष्मी से शोभित ब्रह्म मोक्ष को चाहनेवाले हे मानव! जिस कारण, कल्याण के लिये क्षोदरहित, बलसे अपराजित भाग्य को बनाते हुये, इस शान्तिनाथ भगवान को षट्खण्डाधिप भरतचक्रवर्ती का अतिशय मनोहर ऐश्वर्य सेवन करनेसे महाव्रत ग्रहण करने में परिपन्थी नहीं हुआ, इसलिये, चतुर तुम निश्चितरूप से कपट और मैथुन से रहित श्रीशान्तिनाथ जिनेश्वर के शासन (प्रवचन) में रुचि ( श्रद्धा ) करो ॥ १ ॥

येषां चेतसि निर्मले शमवतां मोक्षाध्वनो दीपिका
प्रज्ञालाभवतां क्रिया सुरुचिताऽरं भावनाऽऽभोगतः ।
ते श्रीमज्जिनपुङ्गवा हतभया नित्यं विरक्ताः सुखं
प्रज्ञाला भवतां क्रियासुरुचितारम्भावना भोगतः ॥ २ ॥

**अन्वय** येषाम् प्रज्ञा-लाभवताम् शमवताम् अरम् निर्मले चेतसि भावना-आभोगत. मोक्ष-अध्वन· दीपिका क्रिया, सु-रुचिता (अस्ति), हत-भया निल भोगत विरक्ता प्रज्ञा-ला उचित-आरम्भ-अवना, ते श्रीमत्-जिन-पुङ्गवा भवताम् सुखम् क्रियासु ॥ २ ॥

**अर्थ** जिन मार्गानुसारी ज्ञान की प्राप्ति करनेवालों, उपशमशालियों के अत्यन्त निर्मल (अश्रद्धा आदि मलों से रहित) चित्तमें भावना (अहिंसादि व्रतसंबन्धिनी ध्यानभूमिकामूलवासना) के आभोग-प्रपंच से मोक्ष के मार्ग को दिखानेवाली शुभ अनुष्ठान रूप क्रिया-कर्म अत्यन्तरुचि से युक्त है, भय से रहित, निल विषयभोग से विरक्त, (मोक्ष-साधक उचित उद्यमवालों की रक्षाकरनेवाले) वे श्रीमत् जिनेश्वरो आपको सुख करें ॥ २ ॥

मिथ्यादृष्टिमतं यतो ध्रुवमभूत् प्रध्वस्तदोषात् क्षिता-
वाचारोचितमानमारयमदम्भावारिताऽपाप ! हे ।
तं सिद्धान्तमभङ्गभङ्गकलितं श्रद्धाय चित्ते निजे
वाचा रोचित ! मानमारयमदं भावारितापापहे ॥ ३ ॥

**अन्वय** हे अ-पाप ! हे अदम्भ-अवारित ! हे वाचा रोचित ! प्रध्वस्त-दोषात् यत (सिद्धान्तात्), क्षितौ, ध्रुवम्, मिथ्यादृष्टि-मतम् अ-रयम् अभूत्, त्वम्, अभङ्ग-भङ्ग-कलितम् मान-मार-यम-दम् आचार-उचितम् त सिद्धान्तम् भावारि-ताप अपहे निजे चित्ते श्रद्धाय आनम ॥ ३ ॥

**अर्थ** पापरहित ! निष्कपट समुचितमार्गानुगामी, हे सरस्वती से अङ्गीकृत ! अज्ञानादि विनाशक जिस सिद्धान्त से पृथिवीपर निश्चित रूपसे मिथ्यादृष्टि अन्यदर्शनवालो का मत फैलने नहीं पाया, तुम अकाट्य विकल्पविशेषों से युक्त, अहङ्कार कंदर्प और मृत्यु को नाश करनेवाले, शुभ अनुष्ठान के अनुरूप उस सिद्धान्त को भावारि (क्रोध आदि कषायों) के ताप को नाश करनेवाले अपने चित्त में श्रद्धा से युक्त होकर नमस्कार करो ॥ ३ ॥

शत्रूणां घनधैर्यनिर्जितभया त्वां शासनस्वामिनी
पातादानतमानवासुरहिता रुच्या सुमुद्राजिषु ।
श्रीशान्तिक्रमयुग्मसेवनरता नित्यं हतव्यग्रता-
पातादानतमा नवासु रहिताऽरुच्या सुमुद्राऽऽजिषु ॥ ४ ॥

**अन्वय** हे सुमुद्र ! शत्रूणाम् नवासु आजिषु घन-धैर्य-निर्जित-भया, आ-नत-मानव-असुर-हिता, सु-मुद्-राजिषु रुच्या, नित्यं श्रीशान्ति-क्रम-युग्मसेवन-रता, हत-व्यग्रता-पात-अदान-तमा, अ-रुच्या रहिता शासनस्वामिनी त्वां पातात् ॥ ४ ॥

**अर्थ** हे सुन्दर मुद्रावाले मानव ! शत्रुओ के संग्रामों में अत्यधिक धैर्य से भय को जीतनेवाली, चारों तरफ से प्रणत मनुष्यों और भवनपति देवो को हित करनेवाली, नवीन प्रशस्त आनन्दवालों की श्रेणियों में सुन्दर, श्रीशान्तिनाथ जिनेश्वर के दोनों चरणों की सेवा मे नित्य लगी हुई, आकुलता, पतन और कृपणता रूपी अन्धकार को नाश करने वाली शासन देवता तुमको रक्षा करे ॥ ४ ॥

## श्रीकुन्थुजिनस्तुतिः १७

स जयति जिनकुन्थुर्लोभसक्षोभहीनो महति सुरमणीनां वैभवे सन्निधाने ।
इह भवति विना यं मानसं हन्त ! केषामहति सुरमणीनां वै भवे सन्निधाने ? ॥ १ ॥

**अन्वय** यं विना इह भवे वै (निश्चये) सुन्दरमणीनां सन्निधाने केषा मानस हन्त ! अहति (अक्षीण-शुभ अध्यवसायं) भवति ? न केषामपि इत्यर्थ, सत्-निधाने महति सुर-मणीना वैभवे लोभ सक्षोभ-हीन स जिनकुन्थुः जयति ॥ १ ॥

**अर्थ** जिस भगवान कुन्थु के विना, इस संसारमें निश्चितरूप से, सुन्दर स्त्रियों के समीप में किसीका भी हृदय अक्षीण शुभ अध्यवसायवाला नहीं हुआ, और सुन्दर महापद्मादि निधान से युक्त, बहुत बडा देवताधिष्ठित चौदह रत्नों के वैभवमें लोभ के संक्षोभ से रहित सर्वोत्कृष्ट उस कुन्थु जिनेश्वरकी जय हो ॥ १ ॥

जयति जिनततिः सा विश्वमाधातुमीशाऽमदयति महिताऽरं किन्न रीणामपाशम् ? ।
विलसितमपि यस्या हन्त ! नैव स्म चित्तं मदयति महि तारं किन्नरीणामपाशम् ॥ २ ॥

**अन्वय** किन्नरीणाम् अपि अप-आशम् महि तारम् विलसितम्, यस्याः चित्तम् हन्त ! न एव मदयति स्म विश्वम् रीण-आम-पाशम् आधातुम् न ईशा किम् ? ( समर्था एव ) अरम् अ-मद-यति-महिता सा जिन-तति जयति ॥ २ ॥

**अर्थ** अहो ! किन्नरियों के भी उत्सवयुक्त महासुन्दर विलसित ( गीत-हास नाच आदि हावभाव ) अप आश ( प्रभुको विकृत मन करने की इच्छामें निराश ) होकर जिसके हृदयको विकारयुक्त नहीं कर सका, संसार को रोग पाश से रहित करने में समर्थ, अत्यन्त अनहङ्कारी साधुओं के द्वारा भावस्तवसे पूजित वह जिनतति ( जिनेश्वरों की श्रेणी ) जय को पा रही है ॥ २ ॥

अवतु गदितमाप्तैस्त्वां मतं जन्मसिन्धौ परमतरणहेतुस्छायया भासमानैः ।
विविधनयसमूहस्थानसङ्गत्यपास्तापरमतरण ! हेऽतुच्छायया भाऽसमानैः ॥ ३ ॥

**अन्वय** हे विविध-नय-समूह-स्थान-सङ्गति अपास्त-पर-मत-रण ! जन्म-सिन्धौ परमन्तरण हेतु, भा-अ-समानैः अ-तुच्छ-आयया छायया भासमानैः आप्तैः ( तीर्थङ्करैः ) गदितम् मतम्, त्वाम् अवतु ॥ ३ ॥

**अर्थ** हे विचित्र नैगमादि नयों के समुदाय की स्थान सङ्गति ( औचित्य योजन ) से अपर ( नैयायिकादि ) दर्शन रूप संग्राम को दूर भगाने वाले सज्जन ! संसारसमुद्र में परम पारजानेका कारण, कान्ति से निरुपम बहुत बडा लाभ को देनेवाली शोभासे सुशोभित, तीर्थङ्करों से कहा हुआ सिद्धान्त तुमको रक्षा करे ॥ ३ ॥

कलितमदनलीलाऽधिष्ठिता चारु कान्तात् सदसिरुचितमारादु धाम हन्तापकारम् ।
हरतु पुरुषदत्ता तन्वती शर्म पुंसां सदसि रुचितमाऽऽराद्धाऽमहं तापकारम् ॥ ४ ॥

**अन्वय** उचित-मारात् कान्तात् कलित-मदन-लीला, चारु-धाम अधिष्ठिता, सत्-असि , रुचितम् शर्म ( सुख ) तन्वती आराद्धा पुरुषदत्ता हन्त ! पुंसाम् सदसि अ-महम् तापकारम् अपकारम् हरतु ॥ ४ ॥

**अर्थ** योग्यकंदर्पवाले पति से कामक्रीडा-करनेवाली, सुन्दर गृहमें रहनेवाली, सुन्दर तलवारवाली, रुचिविषयक सुखको करती हुई, पूजित पुरुषदत्ता देवी, पुरुषो की सभा मे उत्सवरहित तापकारक अपकार ( परलोकके अपायरूप अपराध ) को दूर करे ॥ ४ ॥

## श्रीअरजिनस्तुतिः १८

हरन्तं संस्तवीम्यहं त्वामरजिन ! सततं भवोद्भवा-
मानमदसुरसार्थवाचंयम ! दम्भरताऽऽधिपापदम् ॥
विगणितचक्रवर्तिवैभवमुद्दामपराक्रमं हता-
मानमद ! सुरसार्थवाचं यमदं भरताधिपाऽऽपदम् ॥ १ ॥

**अन्वय** हे आ-नमत्-असुर-सार्थ-वाचंयम ! हे हत-अमान-मद ! हे भरत-अधिप ! हे अरजिन ! दम्भ-रत-आधि-पाप-दम्, विगणित-चक्रवर्ति-वैभवं, उद्दाम-पराक्रमम्, सु-रस-अर्थ-वाचम्, यम-दम्, भव-उद्भवाम् आपद हरन्तं त्वाम् अहम् सततम् सम्-स्तवीमि ॥ १ ॥

**अर्थ** दानवसमूह और श्रमणों से सम्यग् नमस्कृत ! अपरिमित अहंकारको दूर भगानेवाले ! भरतक्षेत्र के स्वामि ! हे अरजिन ! कपट, मैथुन, मानसी पीडा और पापो को खण्डित करनेवाले, चक्रवर्ती के ऐश्वर्य को तृणवत् छोडदेनेवाले, सर्वातिशायी पराक्रमवाले सुन्दर रसयुक्त अर्थवाली वाणी से युक्त, अन्य जीवोंको यम-महाव्रत देनेवाले, संसारसे उत्पन्न विपत्ति को दूर करनेवाले आपको मैं निरन्तर अच्छीतरह से स्तुति करूँ ॥ १ ॥

भीमभवं हरन्तमपगतमदकोपाटोपमर्हतां
स्मरतरणाधिकारमुदितापदमुद्यमविरतमुत्करम् ।
भक्तिनताखिलसुरमौलिस्थितरत्नरुचाऽरुणक्रमं
स्मरत रणाधिकारमुदितापदमुद्यमाविरतमुत्करम् ॥ २ ॥

**अन्वय** [हे जनाः ! यूयम्] अपगत-मद-कोप-आटोपम्, स्मर-तरण-अधिकार-मुदिता-पदम्, उत्-त्यम्, भक्ति-नत-अखिल-सुर-मौलि-स्थित-रत्न-रुचा—अरुण-क्रमम्, उद्यम-विरत-मुत्-करम्, रण-अधिकारम्, उदित-आपदम्-भीम-भवम् हरन्तम्, अर्हताम् उत्करम्, अविरतम् स्मरत ॥ २ ॥

**अर्थ** हे लोको ! तुम लोग, अहङ्कार और क्रोधाडम्बर को दूर भगादेनेवाले, कंदर्प के तरण (पारगमन) में अधिकार से परमसुखतुष्टि का स्थान रूप, उत्कृष्ट लक्ष्मीवाले, भक्ति से नमे हुए समस्त देवों के मस्तक पर रहे हुए रत्नों की कान्ति से किञ्चित् रक्तचरणवाले, आदर से व्रत ग्रहण करनेवालों को आनन्द करनेवाले, संग्राम का अधिकारवाला और उत्पन्न विपत्तिवाला भयानक संसार को कारणोच्छेदनपूर्वक दूर भगानेवाले तीर्थङ्करों के समूहको निरन्तर स्मरण करो ॥ २ ॥

भीमभवोदधेर्भुवनमेव यतो विधुशुभ्रमञ्जसा-
ऽभवदवतो यशोऽमितरणेन न मोदितं नयमितं हि तम् ॥
जिनपसमयमनन्तभङ्गं जन ! दर्शनशुद्धचेतसा
भवदवतोय ! शोभित ! रणेन नमादितं न यमितं हितम् ॥ ३ ॥

**अन्वय** हे दर्शन-शुद्ध-चेतसा शोभित ! हे भवदव-तोय ! हे जन ! त्वम् हि भुवनम् एव (सकलं जगत्) अवत यत (सिद्धान्तात्) भीम-भव-उदधेः अमित-तरणेन विधु-शुभ्रम् यशः अभवत्, न मादितम्, नयम्-इतम्, अनन्त-भङ्गम् रणेन न यमितम्, अ-दितम्, हितम् तम् जिनप-समयम् अञ्जसा नम ॥ ३ ॥

**अर्थ** सम्यक्त्वगुण सदसद् विवेकसे प्राप्त निर्मल हृदय से शोभित ! अत एव संसार दावानल जल ! हे प्राणी ! तुम, निश्चित रूपसे समस्त जगत् को रक्षा करता हुआ, जिस सिद्धान्त से भयानक संसारसमुद्र का सर्वथा पारगमन से चन्द्रमा के जैसा उज्ज्वल यश हुआ, पुनः उन्मादसे रहित, नय अथवा शुद्ध पथ से युक्त, अपरिमित भङ्ग (विकल्प विशेष) से युक्त, संग्राम से अबद्ध, अखण्डित, हितकारक उस जिनेश्वरके सिद्धान्त को शीघ्र नमस्कार करो ॥ ३ ॥

चक्रधरा करालपरघातवलिष्ठमधिष्ठिता प्रभा-
सुरविनतातनुभवपृष्ठमनुदितापदं गतारवाक् ।
दलयतु दुष्कृतं जिनवरागमभक्तिभृतामनारतं
सुरविनता तनुभवपृष्ठमनु दितापदरङ्गतारवाक् ॥ ४ ॥

**अन्वय** कराल-पर-घात वलिष्ठम्, प्र-भासुर विनता-तनु-भव-पृष्ठम् अधिष्ठिता, अन्-उदित-आपत्, अरम् गत-आर, वाक्, सुर-वि-नता, तनु-भव-पृष्ठम् अनु (लक्षीकृत्य) दित आपद्-अरङ्ग-तार-वाक् **चक्रधरा** (चक्रेश्वरी), जिनवर-आगम भक्तिभृताम् अनारतम् दुष्कृतम् दलयतु ॥ ४ ॥

**अर्थ** भयानक शत्रुओं की चोट से अत्यन्त बलवान्, देदीप्यमान् गरुडपृष्ठ पर बैठी हुई, विपत्ति को नहीं उत्पन्न होने देनेवाली, शत्रुओं की वाणी को अत्यन्त दूर करनेवाली, देवों से नमस्कृत, स्वल्प भवावशेषवाले जनको लक्ष्यकरके *रंगसे रहित मनोहर वाणीवाली, विपत्तिको खण्डितकरनेवाली, चक्र को धारणकरनेवाली 'चक्रेश्वरी' देवी जिनेश्वरशासन के भक्तों के पापको निरन्तर खण्ड करे अर्थात् टुकड़ा टुकड़ा करके नाश करे ॥ ४ ॥

## श्रीमल्लिजिनस्तुतिः १९

महोदयं प्रवितनु मल्लिनाथ ! मेऽघनाघ ! नोदितपरमोहमान ! सः ।
अभूर्महाव्रतघनकाननेषु यो घनाघनोऽदितपरमोहमानसः ॥ १ ॥

**अन्वय** हे अ-घन-अघ ! हे नोदित-पर मोह-मान ! हे मल्लिनाथ ! अदित-परम-ऊह-मानसः यः त्वम् महाव्रत-घन-काननेषु घनाघनः अभूः सः (त्वम्) मे (मम) महोदयं प्रवितनु ॥ १ ॥

* 'रंग' यह ध्वनिके प्रकारका नाम है. देखो पाणिनीयशिक्षा। ५५।

**अर्थ** अविरलपापरहित! परके मोह–अज्ञान, और अहङ्कार को चलित करने वाले! हे मल्लिनाथ जिनेश्वर! अखण्डित–विशिष्ट विचारयुक्त हृदयवाले जो आप महाव्रतरूपी सघन वनोंमें मेघसम हुए, वे आप मुझे मोक्ष अथवा आनंदोत्सवों के उदय को करें ॥ १ ॥

मुनीश्वरैः स्मृत ! कुरु सौख्यमर्हतां सदा नतामर ! समुदाय ! शोभितः ।
घनैर्गुणैर्जगति विशेषयन् श्रिया सदानतामरस ! मुदा यशोऽमितः ॥ २ ॥

**अन्वय** हे मुनीश्वरैः मुदा स्मृत ! हे नत-अमर ! हे स-दान-तामरस ! हे अर्हताम् समुदाय ! घनैः गुणैः जगति अमितः यशः विशेषयन् श्रिया शोभितः (त्वम्) सदा सौख्यम् कुरु ॥ २ ॥

**अर्थ** मुनीश्वरों–योगीश्वरों के द्वारा हर्ष से स्मरण किए गये ! देवों से नमस्कृत, त्याग और कमल से युक्त ! हे जिनेश्वरों के समूह ! अधिक गुणों (औदार्यादिगुणों) से संसार में चारों तरफ यश फैलाते हुए अतिशयादिकी लक्ष्मी से सुशोभित आप सर्वदा सौख्य दें ॥ २ ॥

जिनः स यं पठितमनेकयोगिभिर्मुदा रसं गतमपरागमाऽऽह तम् ।
सदागमं शिवसुखदं स्तुवेतरां मुदारसङ्गतमपरागमाहतम् ॥ ३ ॥

**अन्वय** अनेक-योगिभिः मुदा पठितम्, रसम् गतम्, अप-रागम् यम् (सिद्धान्तम्) जिनः आह स, (अहम्) उदार-सङ्गतम्, अपर-आगम-अहतम्, शिव-सुख-दम् तम् सद्-आगमम् स्तुवेतराम् ॥ ३ ॥

**अर्थ** समस्त साधुओं के द्वारा हर्षसे पढे हुए, शान्तनामक रस से युक्त, रागसे रहित, जिस सिद्धान्त को जिनेश्वरने कहा, मैं सुन्दर, बहुमूल्यवान् और सङ्गति से युक्त, इतर दर्शनोंके सिद्धान्तो से अबाधित, मोक्षसुखदायक उस उत्तम सिद्धान्त को अत्यन्त स्तुति करूँ ॥ ३ ॥

तनोतु गीः समरुचिं सतामना विलासभा गवि कृतधीरतापदा ।
शुचिद्युतिः पटुरणदच्छकच्छपी विलासभागविकृतधीरतापदा ॥ ४ ॥

**अन्वय** अनाविला, स-भा, कृत-धीरता-पदा, शुचि-द्युतिः, पटु-रणत्-अच्छ-कच्छपी विलास-भाक्, अ-विकृत-धीः, अ-ताप-दा गीः सताम् गवि (पृथिव्याम्) समय-रुचिम् तनोतु ॥ ४ ॥

**अर्थ** निर्मल, कान्ति से युक्त, पाण्डित्यपद को करनेवाली, उज्ज्वल वर्णवाली, खूब रणरणाती हुई निर्मल वीणा के ग्राम मूर्च्छना आदि विलास को भजनेवाली, विकाररहित बुद्धिवाली, क्लेश को नहीं देनेवाली 'भारती सरस्वती देवी,' सज्जनों की भूमि में प्रवचन की श्रद्धा को विस्तार करे ॥ ४ ॥

## श्रीमुनिसुव्रतजिनस्तुतिः २०

तव मुनिसुव्रत ! क्रमयुगं ननु कैः प्रतिमावनघन ! रोहितं नमति मानितमोहरणम् ।
नतसुरमौलिरत्नविभया विनयेन विभवनघ ! नरो हितं न मतिमानितमोहरणम् ॥ १ ॥

**अन्वय** हे प्रतिमा-वन-घन ! हे अनघ ! हे विभो ! हे मुनिसुव्रत ! नत-सुर-मौलि रत्न-विभया रोहितम्, मानि-तम -हरणम्, हितम्, इत-मोह-रणम्, तव क्रम-युगम्, कः मतिमान् नरः ननु विनयेन न नमति? (सर्वे एव नमस्कुरुते इत्यर्थः) ॥ १ ॥

**अर्थ** हे *प्रतिमारूपी वनमें मेघके समान ! निष्पाप हे मुनिसुव्रत प्रभो ! नमे हुए देवोंके मुकुटों के रत्नोंकी कान्तिसे किञ्चित् रक्तवर्णवाले, मानवालो के अज्ञानको नाशकरनेवाले, हितकारक, अज्ञान और संग्रामको दूरभगानेवाले तुम्हारे दोनों चरणोंको कौन बुद्धिमान मनुष्य निश्चितरूपसे विनयसे नहीं नमता है? अर्थात् सभी विनीत होकर नमस्कार करते हैं ॥ १ ॥

* नवनवोन्मेषशालिनी बुद्धि प्रतिमा ।

अवति[5] जगन्ति[4] याऽऽशु[15] भवती[12] मयि[14] पारगतावलि[2] ! तरसेहितानि[16] सुरवा[11] रसभाजि[13] तया[7] ।
दिशतु[18] गिरा[8] निरस्तमदना[10] रमणीहसितावलितरसे[1] ! हितानि[17] सुरवारसभाजितया[6] ॥ २ ॥

**अन्वय** हे रमणी-हसित-अ-वलित-रसे ! हे पारगत-आवलि ! या जगन्ति अवति, सुर-वार-सभाजितया तया गिरा तरसा निरस्त-मदना सु-रवा भवती, रसभाजि ( रसम् भजति ) मयि आशु ईहितानि हितानि दिशतु ॥ २ ॥

**अर्थ** कामिनियोकी हँसीसे अविचलित शान्तिनामक रसको धारण करनेवाली ! हे तीर्थङ्करोंकी श्रेणी !, जो जगत् को रक्षा करती है, देवो के समूह से सेवित उस वाणीके द्वारा शीघ्र कंदर्पके दर्पको नाश करनेवाली, सुन्दर ध्वनिवाली आप, रस ( स्थायीभाव ) को भजनेवाले अर्थात् स्थिरभक्ति करनेवाले मुझसे शीघ्र वाञ्छित हितों सुखो को दो ॥ २ ॥

यतिभिर[2]धीतमा[3]र्हतमतं[14] नयवज्रहताऽघनगम[4]ऽभङ्गमानमरणैर[1]नुयोगभृतम्[10] ।
अतिहितहेतुतां[12] दधद[13]ऽपास्तभवं[5] रहितं[9] घनगमभङ्गम[6]ऽऽनम[15]रणैर[7]नु[11] योगभृतम्[8] ॥ ३ ॥

**अन्वय** [ हे जन ! त्वम् ] अ-भङ्ग-मानमरणैः यतिभि अधीतम्, नय-वज्र-हत-अघ-नगम्, अपास्त-भवम्, घन-गम-भङ्गम्, रणै. रहितम्, अनुयोग-भृतम्, योगभृतम् अनु ( लक्षीकृत्य ) अति-हित-हेतुतां दधत् आर्हत-मतम् ( जैनेन्द्र-प्रवचनम् ) आ-नम ॥ ३ ॥

**अर्थ** हे प्राणी ! तुम, पराजय–अहङ्कार और मृत्यु से रहित यतियों–मुनियों से पठित, नयरूपी वज्रों से पापरूपी पर्वतको नाश करनेवाले, संसारको निराकरण करनेवाले, अविरल सदृशपाठ और विकल्पविशेषो से युक्त, संग्रामोकी इच्छाको नष्ट करनेवाले चारों अनुयोग ( सूत्रार्थ–निर्युक्ति मिश्रितार्थ निरवशेषार्थ रूप ) से पूर्ण, योगभृत् ( श्रुताध्ययन-योग्यतारूप योगोद्वहन क्रियाविशेषको पोषण करनेवाले ) को लक्ष्य करके परमकल्याणकारिता को धारण करनेवाले आर्हतमत–जैनेन्द्र प्रवचन को नमस्कार करो ॥ ३ ॥

वितरतु[19] वाञ्छितं[18] कनकरुक्[1] भुवि[14] गौर्यशो-
हृदि[2]ततमा[3]महाशुभविनोदि विमानवताम्[9] ।
रिपुमदनाशिनी[4] विलसितेन[6] मुदं[11] ददती[12]
हृदि[10] ततमाऽऽमहा[17]ऽऽशु[15] भविनो[16] दिवि[7] मानवताम्[8] ॥ ४ ॥

**अन्वय** कनक-रुक्, अ-यशस्-हृत्, इत-तमा, रिपु-मद-नाशिनी, आम-हा, विलसितेन दिवि मानवताम् महा-शुभ-विनोदि विमानवताम् हृदि मुदम् ददती गौरी भुवि आशु भविन ततं वाञ्छितम् वितरतु ॥ ४ ॥

**अर्थ** सुवर्णके समान कान्तिवाली, अकीर्तिको हरण करनेवाली, पापको दूर करनेवाली, शत्रुमदनाशिनी, रोगनाशिनी, अपना विलास से स्वर्गमे ऐश्वर्यादिगुणोंसे अभिमान करनेवाले अत्यन्त सुन्दर क्रीडारसिक वैमानिको के हृदयमें हर्षको देती हुई 'गौरी देवी' पृथिवीपर शीघ्र भव्य जन के विस्तीर्ण इच्छित फल को देवे ॥ ४ ॥

## श्रीनमिजिनस्तुति २१

यतो[1] यान्ति[7] क्षिप्रं[6] नमिर[15]घवने[8] नो[21]ऽत्र[16] तनुते[22],
विभा[14]वर्यो नाशं[5] कम[17]ऽनलसमा[18]ऽऽनन्दितम[20]ऽदं[10]ः ।
दधद्[12] भासांचक्रं[11] रविकरसमूहा[3]दिव[4] महा-
विभावर्यो[2]ऽनाशङ्कम[19]ऽनलसमानं[9] दितमदः[13] ॥ १ ॥

**अन्वय** यत ( भासाचक्रात् ) महा-विभावर्य रवि-कर-समूहात् इव क्षिप्रं नाशम् यान्ति, अघ-वने अनल-समानम् अद भासाचक्रम्, दधत्, दित-मद विभावर्य नमि, अत्र कम् अनलसम् अनाशङ्कम् आनन्दितम् न तनुते ( सर्वमपि भय-रहितम्, आनन्दितम् च कुरुते इत्यर्थ ) ॥ १ ॥

**अर्थ** जिस भामण्डलसे महाविभावरियाँ ( अर्थात् घनान्धकारवाली अमावास्या आदिकी रातें ) सूर्य की किरणो के समूह की तरह शीघ्र नष्ट होजाती हैं, पापरूपी वनमें अग्निके समान उस भामण्डलको धारण करनेवाले, जात्यादि मदको खण्डित करनेवाले, विशिष्ट कान्तिसे श्रेष्ठ भगवान नमिजिनेश्वर, इस ससारमें किसको भगवान जिनेश्वरकी आज्ञा के अङ्गीकार करने में आलसरहित, निर्भय और आनन्दित नहीं करते हैं? अर्थात् सभी को भयरहित और आनन्दित करते हैं ॥ १ ॥

